सरस्वतीभवन-ग्रन्थमाला

(११०)

# गोरक्षसिद्धान्तसङ्ग्रहः

श्रीजनार्दनशास्त्री पाण्डेयः




वाराणसेय-संस्कृत-विश्वविद्यालयः

# SARASWATĪBHAVANA-GRANTHAMĀLĀ

( *Vol. 110* )

**General Editor**

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ, 'VĀGĪŚA ŚĀSTRĪ'

Director, Research Institute,

Varanaseya Sanskrit Vishvavidyalaya,

Varanasi.




# GORAKṢA SIDDHĀNTA SAṀGRAHAḤ

Edited by

JANĀRDANA ŚĀSTRĪ PĀṆḌEYA

VARANASI

**1973**

सरस्वतीभवन-ग्रन्थमाला

( ११० )

प्रधानसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

गवेषणालयसञ्चालकः

वाराणसेयसंस्कृतविश्वविद्यालये

# गोरक्षसिद्धान्तसंग्रहः

( परिवर्धितं संशोधितं च संस्करणम् )

सम्पादकः

श्रीजनार्दनशास्त्री पाण्डेयः

वाराणस्याम्

२०३० तमे वैक्रमाब्दे १८९५ तमे शकाब्दे १९७३ तमे ख्रिस्ताब्दे

प्रकाशकः—
सञ्चालकः
गवेषणालयस्य
वाराणसेय-संस्कृत-विश्वविद्यालये

प्राप्तिस्थानम्—
प्रकाशनविभागः
वाराणसेयसंस्कृतविश्वविद्यालयः
वाराणसी-२

प्रथमं संस्करणम् : ५०० प्रतिरूपाणि
मूल्यम्—१०.५० रूप्यकाणि

मुद्रकः
श्रीघनश्याम उपाध्यायः
प्रबन्धकः
वाराणसेय-संस्कृत-विश्वविद्यालयीयमुद्रणालयस्य

# प्रास्ताविकम्

रोगजरामृत्युभयाकुलो जिजीविषुर्मानवो नीरुक्त्वस्यामरत्वस्य च समासादनाय चिराद् दृश्यते प्रयतमानो भूमण्डले। रोगविखण्डनाय जरापसारणाय च ऋग्वेदोपवेद आयुर्वेदः प्रवर्तते सुपुरातनकालाद् भारते वर्षे। रुक्प्रतिक्रियात्मका नानाविधा आविष्कृता ओषधयः, साम्प्रतं चाप्याविष्क्रियन्ते चिकित्सकैराविष्कारकैः। यद्यपि मृत्युजयार्थमपि बहुविधा यत्ना आस्थिताश्चिकित्साक्षेत्रे, सम्प्रत्यपि विधीयन्ते, तथापि न क्वापि भावितं साफल्यं तज्ज्ञैः। 'जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः' इति पातञ्जलयोगसूत्राद् जन्मजसिद्धिरोषधिजसिद्धिर्मन्त्रजसिद्धिस्तपोजसिद्धिः समाधिजसिद्धिश्चेति पञ्च सिद्धयो ज्ञायन्ते। तत्रामरत्वप्रतिपादनाय सिद्धिपरायणैः सिद्धसंप्रदायानुयायिभिर्गोरक्षनाथादिभिरायुर्वेदे रसायनतन्त्रं पारदशक्तिप्रकाशकमाविष्कृतम्, अनादिकालतः प्रवर्तमाने योगमार्गे चाविर्भावितः पुरातनपरम्परातः किञ्चिद्विलक्षणो हठयोगः। तत्र गोरक्षनाथेन योगमार्गः सुव्यवस्थापित इति तद्ग्रन्थानां परिशीलनेन बुध्यते। तद्रचिताः प्रायशोऽष्टाविंशतिसंख्याका ग्रन्थाः संस्कृतभाषामया अन्ये च चत्वारिंशत्संख्याका हिन्दीभाषामयाः प्रथिताः।

## गोरक्षनाथः

यद्यपि विभिन्नैः प्रमाणैर्गोरक्षनाथो दशमशताब्दीक एकादशशताब्दीको वा सिद्ध्यतीति लब्धवर्णानां मतम्, तथापि गोरक्षसिद्धान्तसंग्रहकारानुसारेण ब्रह्माण्डपुराणे ललितापुरवर्णने ललिताखण्डेऽपि गोरक्षनाथस्योल्लेखो विद्यते—

सिद्धदिव्यर्षयश्चैव पवनाभ्यासिनोऽपरे।
गोरक्षप्रमुखाश्चान्ये योगिनो योगतत्पराः॥ इति।

श्रीकृष्णकृतगोरक्षनाथस्तोत्रे गोरक्षस्तुतिस्तत्रास्तीति तन्मतम् ( ३८ पृ० )।

## सिद्धमतपरम्परा

### ( सिद्धो नाथोऽवधूतश्चेत्यनर्थान्तरम् )

पद्मपुराणगतकपिलगीतायां नवनाथानामुल्लेखः 'दत्तात्रेयादिसिद्धानां नवनाथास्तथैव

च' इति । शाबरतन्त्रानुसारेण द्वादश सिद्धाः सन्ति । ते चेमे—

१. आदिनाथः, २. अनादिः, ३. कालः, ४. अतिकालकः, ५. करालः, ६. विकरालः, ७. महाकालः, ८. कालभैरवनाथः, ६. बटुकः, १०. भूतनाथः, ११. वीरनाथः, १२. श्रीकण्ठश्चेति ।

शिष्यपरम्परायां द्वादश शिष्याः प्रसिद्धाः । ते चेमे—

१. नागार्जुनः, २. जडभरतः, ३. हरिश्चन्द्रः, ४. सत्यनाथः, ५. भीमनाथः, ६. गोरक्षनाथः, ७. चर्पटः, ८. अवद्यः, ९. वैराग्यः, १०. कन्थाधारी, ११ जलन्धरः, १२. मलयार्जुनश्चेति ( द्र० १४, १५ पृ० ) ।

सिद्धपरम्परायां तु नव सिद्धाः प्रथन्ते—१. श्रीगुरुरादिनाथः, २. मत्स्येन्द्रनाथः, ३. उदयनाथः, ४. दण्डनाथः, ५. सत्यनाथः, ६. संतोषनाथः, ७. कूर्मनाथः, ८. भवनार्जिः, ९. गोरक्षनाथश्चेति ।

सिद्धा एव नाथरूपत्वेन प्रसिद्धाः । अस्य ग्रन्थकारस्यानुसारेण मण्डनमिश्रः ( सुरेश्वराचार्यः ) शङ्कराचार्यश्चोभावेव सिद्धोपदेशेन गृहीतावधूतावस्थौ जातौ ( १४ पृ० ) । कापालिकास्तान्त्रिकाः शाक्ताश्चास्यैव संप्रदायस्य शाखारूपाः ।

## समन्वयकर्ताऽवधूत एव गुरुः

सिद्धसंप्रदाये यद्यपि सर्वेषां शास्त्राणां निन्दा कृता, तथापि हठयोगप्रदीपिकानुसारेण तत्र गुरुवाक्येन ज्ञानं, मुक्तिः, स्थितिः, सिद्धिरित्यादयो लभ्यन्त इति गुरुमहिमाऽङ्गीकृत एव ( १२,३१ पृ० ) । तस्मिन् मार्गे सर्वश्रेयोमूलभूतो गुरुरेव । स चावधूत एव, नान्यः । त्यागभोगाभ्यामलिप्तोऽप्यवधूतस्त्यागभोगप्रदः । स चात्रिवर्णाश्रमी सर्वाधिकारिणां गुरूणामपि गुरुः प्रोक्तः । पक्षपातविनिर्मुक्तः स एव ब्रह्म संपद्यते । अवधूतस्य व्यवहारस्त्वनियत एव । स क्वचिद् भोगी, क्वचित् त्यागी, क्वचित् पिशाचवद् नग्नः, क्वचिद् राजा, क्वचिच्चाचारी इत्येतादृशलक्षणलक्षितोऽवधूतो विधीयते । एवं च सर्वसाधनशिरोमणियोगमूर्तिभूतोऽवधूत एव परमपुरुषार्थविचक्षणो भवति ( ८ पृ० ) ।

योगस्तु कस्यापि सापेक्षो नास्ति । उत्तरावस्थाऽवधूत एवेति तान्त्रिकाणामयमेव सिद्धान्तः षट्शाम्भवरहस्ये दृश्यते ( १४ पृ० ) । अवधूतमार्गो दिव्यः । वेदान्ततात्पर्यंलक्ष्यं चावधूत एवास्ति ( १४ पृ० ) । यः सर्वदर्शनानां स्वरूपदर्शनेन समन्वयं करोति सोऽवधूतः, स योगी स्यात् । प्रारब्धकर्मनिर्मूलकरणमवधूतानामेव कर्म ( १२ पृ० ) । यः

सर्वान् प्रकृतिविकारान् अवधुनोति सोऽवधूतः ( १ पृ० )। तस्य व्युत्पत्तिरित्थं दृश्यते—

अनन्तानन्दब्रह्मज्ञः अकारं तस्य लक्षणम्।
वासना वर्जिता येन वक्तव्यं च निरामयम्॥
वर्तमानेषु वर्तेत वकारं तस्य लक्षणम्।
धूलिधूसरगात्राणि धूतचित्तनिरामयम्॥
ध्यानधारणनिर्मुक्तं धूकारं तस्य लक्षणम्।
तत्त्वचिन्ता येन धूता चिन्ता चेष्टाविवर्जिता॥
तमहङ्कारनिर्मुक्तं तकारं तस्य लक्षणम्। ( २८ पृ० )

भक्तिपूर्वकमेतादृशगुरुप्रणामेन परमपदावाप्तिर्जायते ( १ पृ० )। देहाभिमान एव पक्षपातः। गुणातीतत्वेन पक्षपातरहितस्यात्याश्रमिण एव मुक्तिप्रदगुरुत्वं नान्यस्य कस्यापि। कुलाचारविहीनस्तु गुरुरेको हि दुर्लभः—

वर्णाश्रमाभिमानेन वर्तते श्रुतिकिङ्करः।
अभिमानविहीनस्तु वर्तते श्रुतिमूर्द्धनि॥

## शीर्षण्यं रत्नम्—योगः

इह खलु संसारे योगो भोगश्चेति द्वौ पदार्थौ स्तः। एतद् द्वयं विना किमपि न स्यात्, सर्वस्याप्येतयोरन्तर्भूतत्वात्। तयोर्मध्ये योगे लग्ना महासिद्धाः, भोगे तु संसारिणः। योगस्य फलं मुक्तिः, भोगस्य तु बन्ध इति। यद्यपि भोगाद् बन्धस्तथापि नानाविलासैर्विषयानन्दमनुभवति मानव आदौ। योगिनां तु प्रथमतो मनाग् श्रमो भवेत्। 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्' इति। पश्चात् तु महानन्द इति सन्मार्गो योगमार्गः।

वेदस्य त्वभ्यासेऽप्यवधूतानां दोष एव स्यात्। वेदस्य पूर्वभागस्तु वर्णानामेव, वेदान्तभागस्तु भिक्षूणामेव, योगमार्गोऽस्त्यवधूतानाम्। वेदान्ततात्पर्यं लक्ष्यं चावधूत एवास्तीति ग्रन्थकृन्मतम्।

सर्वेषां वेदादिशास्त्राणामैदम्पर्यं योग एवास्ति। योगशास्त्रं तु सूक्ष्मम्। समुद्रे चेतरवस्तु सुलभम्, रत्नं तु श्रमेण लभ्यते। एवमेव वेदादिशास्त्रे व्यवहारादि सुलभम्, योगस्तु भूरिश्रमेण लभ्यते। यथा रत्नखनौ रत्नमेव लभ्यते, तथा योगशास्त्रे योग एव लभ्यते, नान्यदस्ति किञ्चिदसारं वस्तु। स च योगो गुरुकृपयाऽल्पश्रमेणैव प्राप्यः, सर्वं परित्यज्य सेवनीयः। योग एव परं साधनम्। श्रुतौ स्मृतौ च योगमार्गात् परो मार्गो नास्ति। यथोपायेन दारु मथित्वाऽग्निर्दृश्यते, तथा शरीरस्थ आत्मा योगेनैव साक्षात्क्रियते।

योगिनः श्रेष्ठाः । तेषाममृतं स्थानं ब्रह्मणः परमं पदमस्ति । प्राणायामपरायणा न निवर्तन्ते । ते परं स्थानं लभन्ते । एवं सर्वनमस्कार्यमेतन्मतम् । क्षेत्रज्ञपरमात्मनोः संयोगो योगः । मन्त्रयोगादीनि त्वेतस्यैव योगस्याङ्गानि । वेदादिज्ञानं योगज्ञानादवाप्नोति योगी ( ६ पृ० ) । ध्यानयोगस्य परो महिमा त्वित्थं दृश्यते—

अश्वमेधसहस्राणि वाजपेयशतानि च ।
एकस्य ध्यानयोगस्य कलां नार्हन्ति षोडशीम् ॥ इति ।

## क्रियायुक्तस्य सिद्धिः

शास्त्रपाठमात्रेण क्रियाशून्यस्य सिद्धिर्न संपद्यते । प्रथमे प्रकारे वायुनिरोधः । चले वाते चित्तं भवति चलम्, निश्चले वाते तु चित्तमपि जायते निश्चलम् । द्वितीये प्रकारे तु—मनसः स्थैर्ये वायुनिरोधः ( प्राणायामः ) । ततः स्थिरबिन्दुतेति । हठयोगप्रदीपिकातो योगिनामनेका अवस्था ज्ञायन्ते । तत्रारम्भावस्था—घटावस्था, परिचयावस्था, निष्ठावस्थेत्यादयः ।

## सिद्ध्युत्तरं महानन्दः

नाथसंप्रदायस्य मुख्यमाकर्षणं सिद्ध्युत्तरमहानन्दोऽस्ति । योगाद्यनुष्ठाने कष्टानुभवः स्वाभाविकः । कष्टोत्तरं त्वखण्डैकनाथरूपो ब्रह्मविष्ण्वाद्यधीश्वरो नानारूपो महानानन्दो भवत्येव । ब्रह्मादयः सर्वे तस्य पूजां कुर्वन्ति । योगारूढो नानाभोगान् भुनक्ति, न तु तैर्लिप्यते ( १२ पृ० ) ।

'गोरक्षसिद्धान्तसंग्रहः' इति प्रस्तुते ग्रन्थे सिद्धान्तशब्दो नास्ति राद्धान्तवाचकः । स तु सिद्धमतस्य तात्पर्यमेव सिद्धान्तः, न तु वादिप्रतिवादिभिर्निर्णीतोऽर्थः सिद्धान्तः । सिद्धस्यैव तात्पर्यं सिद्धान्तः । सिद्धस्यैव सिद्धान्तो न त्वन्यस्यात एव शङ्करेण सिद्धान्तबिन्दुः कृतः ( १४ पृ० ) ।

## योगिनां मुख्यचिह्नानि

१. मुद्रा, २. नादः, ३. विभूतिः, ४. आदेशधारणं चेति मुख्यानि चिह्नानि योगिनाम् । १. मुद्राधारणं कर्णयोः क्षुरिकां विना न संभवतीति क्षुरिकोपनिषदि क्षुरिकाप्रशंसा विद्यते ( ७ पृ० ) । एतादृशाः सिद्धा लोके 'कनफटा'-रूपेण प्रसिद्धाः । २. अनाहतश्शृङ्गीति नादः । ३. त्रिपुण्ड्रधारणाय कालाग्निरुद्रोपनिषदि प्रशंसा । ४. सर्वद्वन्द्वक्षयावहा सद्वाणी—आदेशः ।

## परमाद्वैतस्य भाव एव—आत्मा

अस्ति कश्चित् परमाद्वैतस्य भावः । स एवात्मा मन्तव्यः ( १३ पृ० )

## परमात्मा

अथ परमात्मा नाम यथाक्षरमुपासनीयः । न जायते, म्रियते,······ निष्कलो निरञ्जनो निरभिमानः······निराकाङ्क्षः······ । निष्क्रियस्तस्य संस्कारो नास्ति ।

## नादब्रह्म

नाथसंप्रदाये यद्यपि वेदानां सर्वेषां च शास्त्राणामुपेक्षापरकाण्येव वचनानि ( पृ० ४, ६, १०, ११, १२-१३, १८, १६, २०, २३, २४ ), तथापि 'प्रणववेद इत्यभ्युपगम्य तद्द्वारा तत्प्रवर्तकनादब्रह्मेत्यवलम्ब्य नादब्रह्मणो यन्मूलं तत् तत्त्वमिति विश्रान्तिमतां मते का वा श्रुतिः साधिका न भवतीति प्रसिद्धतरमेत्र सर्वत्र' इत्यादिना नादब्रह्ममहिमाऽङ्गीकृतः ।

## योगिनां परमः पुरुषार्थः—मुक्तिः

परमपुरुषार्थस्तु मुक्तिरभ्युपेया । सा चादिदेवपदेन नाथस्वरूपेणावस्थानम् । तत्स्वरूपं तु गोरक्षोपनिषदि—'अद्वैतोपरि सदानन्ददेवता' इति बोध्यम् । आत्मनो बन्धोऽभिमानो ज्ञेयः । तन्निवृत्तिस्तु मोक्षः । सर्वसंकल्पनातीतत्वेन परं ब्रह्म भवति । द्वैताद्वैतविवर्जितं पदं निश्चलं दृश्यते, तदेव सत्यमित्यभ्युपगन्तव्यम् ।

## सत्यां शास्त्रनिन्दायां कथमिह शास्त्रप्रमाणानि

ग्रन्थकारो ग्रन्थेऽस्मिन् पदे पदे वेदशास्त्रादिप्रमाणान्युपस्थापयन्नपि वेदशास्त्राणि निन्दत्येव । स तत्कारणमित्थं प्रकटयति—'एतद्ग्रन्थे बहुशास्त्राणां प्रामाण्यं दीयते । तत् त्वस्मदीयार्थं वा एतन्मार्गस्य शिष्याणां श्रद्धार्थं दीयत इति नास्ति । अस्मिन्नर्थे तु योगशास्त्रस्यैव प्रामाण्यमेतच्छास्त्रज्ञानेन पूर्णम्, परन्तु वादिनां हिताय भोः ग्रन्थान्तरेऽपि भवदीयनानामतान्तरेऽपि चायमेव मार्गः श्रेष्ठः सर्वस्य लक्ष्यभूतोऽवधूत एवेति हेतुर्न तु सिद्धान्तार्थः । अस्माकं त्वन्यप्रमाण उपेक्षेति ज्ञेयम्' इति ( ४९ पृ० ) ।

इतोऽग्रे ग्रन्थकारो वेदादिवचनप्रामाण्यमनुद्धृत्यैव गद्येन गोरक्षसिद्धान्तान् निरूपयति ।

## ग्रन्थस्य भाषा

ग्रन्थस्यास्य संस्कृतभाषा श्लथा विद्यते । भर्तृहरिनाम्ना प्रमाणरूपेण स्मृताः केचन श्लोका न तदीयेषु ग्रन्थेषु लभ्यन्त इति ग्रन्थकारोऽधिकां सामग्रीं कर्णपरम्परयाऽवगता-मुपस्थापति । 'सहस्राणामपि पुरुषाणां कष्टं भवेत्' ( १२ पृ० ), 'शक्तेर्वृत्तान्तं दृष्टम्' ( १३ पृ० ), 'नान्यदस्ति किञ्चिदसारम्' ( १६ पृ० ), 'तत् तु अस्मदीयार्थं वा' ( ४९ पृ० ) इत्यादिषु भाषादोषा दृश्यन्ते ।

## प्रस्तुतं संस्करणम्

प्रसिद्धस्य सिद्धस्य श्रीगोरक्षनाथस्य सिद्धान्तानामेकत्र संग्रहो जिज्ञासूनां महते कल्याणाय जायेतेति धिया सिद्धसंप्रदायानुयायिना केनचित् संस्कृतज्ञेन 'गोरक्षसिद्धान्त-संग्रहः' गद्येन प्रणीतः । स पञ्चत्रिंशत्युत्तरैकोनविंशतितमे खीस्ताब्दे सरस्वतीभवनग्रन्थ-मालाया अष्टादशपुष्परूपेण प्रख्यातवैदुष्यैर्महामहोपाध्यायैर्गोपीनाथकविराजमहोदयैर्ग्रन्थगुण-गरिम्णा यथोपलब्धोऽपूर्ण एव संपादितो विदुषां पुरस्तादुपस्थापनाय । स चेदानीं मुद्रणातीतो नोपलभ्यते जिज्ञासुभिरिति सरस्वतीभवनपण्डितप्रवरेण श्रीजनार्दनपाण्डेयेन संपादितपूर्व-संस्करणतो मनागधिकमंशं गवेषयित्वा तत्रागतवचनोद्धरणादिसंकेतान् परिश्रमेण योजयित्वा सूच्यादिभिश्च भूषयित्वा द्वितीयं संस्करणमिद संपाद्यमानं विदुषां मोदकरं स्यादिति मन्यते ।

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
संचालकः
अनुसन्धानसंस्थानस्य

माघपूर्णिमायां
२०२६
( १७-२-७३ )

# किञ्चिन्निवेदनम्

अथैतस्य गोरक्षसिद्धान्तसङ्ग्रहस्य द्वितीयं संस्करणमुपस्थापयतो मे भृशं मोमुदीति चेतः। मन्ये ग्रन्थस्यास्य नाम "नाथसिद्धान्तसंग्रहः" इति क्रियेत चेत् समीचीनं स्यात्। यतो ह्यत्र प्रतिपादिताः सिद्धान्ता गोरक्षनाथतः पूर्वस्मिन्नपि सिद्धमते प्रचलिता आसन्। गोरक्षनाथोऽस्य सम्प्रदायस्य कश्चिन्महापुरुषोऽभवत्, न तु प्रवर्तकः, अस्य प्रवर्तकस्तु भगवान् आदिनाथः साक्षाच्छिव एव।

यद्यपि घटेसमुद्रन्यायेन लघुकलेवरेऽप्यस्मिन् ग्रन्थे ग्रन्थकृता बहु विवेचितम्, तथापि भारतीयविचारसरणिं तिरस्कृत्य पाश्चात्यपद्धतिप्रभावपिहितचक्षुषामाधुनिकविदुषामेतद्विषयकविवेचनेषु बहुत्र विप्रतिपत्तिं दृष्टवता मयाऽपि कश्चित् स्वकीयोऽभिप्रायोऽत्रोपस्थाप्यते। तत्र तथ्यातथ्यनिर्णयस्तु नीरक्षीरविवेचकानां विद्वद्राजहंसानां वशवर्तीति मन्ये।

## नाथशब्दस्य निरुक्तिः

याच्ञोपतापैश्वर्यात्मकेऽर्थत्रये नाथति इति, आशीरर्थे च नाथते इति विग्रहेण नाथृ धातोर्नाथशब्दो निष्पद्यते। तत्र प्रथमोऽर्थो नाथस्य याचक इति। परस्वत्वनिवृत्तिपूर्वकं स्वस्वत्वोत्पत्त्यनुकूलो व्यापारो याचनार्थः, एवं च महेश्वरस्यापि सतो भक्तानुग्रहार्थं स्वशक्तिबलेन विविधविग्रहवतो भक्तभवनेषु भिक्षुकपरिपाटीमूरीकृत्य पर्यटतोऽस्य स्फुटमेव याचकत्वम्। यद्वा स्वीकारानुकूलो व्यापारो याचना। यथा—"अविनीतं विनयं याचते" इति। एवं स्वशिष्यान् योगविज्ञानादिविविधोपायसाद्गुण्यादेशं स्वीकारयतीति स्फुटं तस्य नाथत्वम्। द्वितीयोऽर्थ उपतापक इति। अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः, शुक्लमशुक्लं शुक्लाशुक्लं चेति त्रिविधं कर्म, एतद्विपाकश्च जात्यायुर्भोगरूपः, तत्तद्दुःखसुखाद्यनुभवजन्यो वासनाराशिः, एते च संसारबन्धास्तेषामयमुपतापकः स्वेन संबन्धविच्छेदको नाथः। तृतीयोऽर्थ ईश्वर इति। अणिमाद्यष्टविधैश्वर्यसम्पन्नो नाथ इति। चतुर्थश्चार्थ आशीर्वादक इति। आदेश इति प्रार्थयमानान् श्रद्धालुजनान् स्वकीयेनाशीर्वचसा स्वस्वाभीष्टप्रदानेन च सन्तोषयतीति नाथः।

## नाथमतस्य प्रत्नत्वम्

इदं च मतं कियतः कालात् प्रचलतीति प्रश्नस्य विशुद्धभारतीयपद्धत्या यद्युत्तरं दीयेत तर्हीदमेवायाति यदनादिकालादेवेदं मतं भारते प्रवर्तते। यतो ह्यस्य प्रवर्तक आदिनाथः शिवः स्वयमनादिरनन्तश्च। अथ चास्माकं सार्वभौमानामुपास्यदेवानां जगन्नाथ-बदरीनाथ

केदारनाथ-विश्वनाथ-सोमनाथादिनाथान्ताभिधानमेतस्य साक्षि यदस्य नाथसम्प्रदायस्यास्माकं संस्कृत्या जीवनेन च सहात्यन्तं घनिष्ठः सम्बन्धोऽतिपुरातनकालात् प्रवर्तते। मत्स्येन्द्रनाथ-गोरक्षनाथादि-सिद्धमहापुरुषाणामवतरणं तु काले-काले साधनापरिपाट्या युगानुरूपं नूतन-दिशो दर्शनाय भवति, तेभ्यः प्रागपीदं सिद्धमतमत्र प्रवृत्तमासीदित्यत्र नास्ति संदेहलेशोऽपि।

विद्वांसः प्रतापिनो वा पुरुषा जगति सर्वेषु देशेषु बभूवुः सन्ति भविष्यन्ति च, किन्तु भारतस्यैवेदं गौरवं यदिदं सिद्धानामपि जन्मभूः, न त्वन्यः कश्चिद् देशोऽनेन गौरवेणालङ्क्रियते। इदमेव कारणं यद् भारतवर्षे सिद्धेभ्यो यादृशं महत्त्वं दीयते तादृशं नान्यस्मै कस्मैचिदपि। सकलशास्त्रपारङ्गतः कश्चिद्वयसा वृद्धोऽपि विद्वान् कस्यचिदल्पवयस्कस्याक्षरज्ञानशून्यस्य सिद्धपुरुषस्य चरणयोर्दण्डवत्पतित्वा प्रणमति। विद्वत्त्वं सिद्धिश्च द्वे पृथग् वस्तुनी विद्येते। स्वकीयपरिश्रमानुरूपं कोऽपि जनो विद्वान् भवितुं शक्नोति किन्तु सिद्धो न सर्वो भवति. "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" इति गीतावाक्यस्येदमेव तात्पर्यं यदनेकजन्मनां साधनायाः फलस्वरूपमेव जनः सिद्धो भवति, सिद्धः सन् परां गतिं (मोक्षमिति यत्त्वत्) लभते। सिद्धस्य कृते नेदमावश्यकं यत् स ग्रन्थवित् शास्त्रज्ञो वा भवतु, यतो हि स्वीयोत्कृष्टसाधनावशात् स तामवस्थां प्राप्नोति यल्लोकेभ्यस्तस्य प्रत्येकं वचनमेव शास्त्रं प्रत्येकमाचरणं च सदाचारो भवति। यदि च सिद्धो भूत्वा शास्त्रज्ञोऽपि भवेच्चेत् स्वर्णे सुगन्धः स्यात्। प्राक्तनानां वशिष्ठव्यासादीनां का कथाधुनिकेऽपि भारतीयेतिहासे गुरुनानक-कबीरदासादयोऽनेके महापुरुषा अभवन् ये शास्त्राणां पण्डिता नासन् किन्तु तेषां सिद्धत्वे तु न कस्यचिद् विवादः। तैर्यदुक्तं तदेव लोकेभ्यः शास्त्रं संजातं यच्चाचरितं तदेव सदाचारः संजातः। एवमेव महावीर-शङ्कराचार्य-गोरक्षनाथादयो महापुरुषाः सिद्धा अप्यासन् विद्वांसश्चेति तेषां चरितैस्तत्प्रणीतशास्त्रैश्च स्फुटमवलोकयितुं शक्यते।

## नव नाथाः

भारतीयसाधनापद्धतौ गुरोः सर्वाधिकं महत्त्वमिति न तिरोहितं कस्यापि। अत्रापि गोरक्षसिद्धान्तसङ्ग्रहे प्रारम्भ एव गुरोर्महिमा प्रदर्शितः। तमेव गुरुं साधको नवात्मतया कल्पयेदिति स्पष्टो निर्देशः, यथा गोरक्षसंहितायां चतुर्विंशे पटले।

गुरुं नवात्मकं भद्रे नवभावैर्विभावयेत्। (गो० सं० २४।१३)

तथा च—

भृगु—लाकुल—संवर्त—महाकाल—पिनाकिनः ।
खड्गीशं च भुजङ्गाख्यं वालीशमर्घिणा युतम् ॥
अर्धेन्दुबिन्दुसंयुक्तं कलया चोर्ध्वदीपितम्।
एतन्नवात्मकं देवि गुरुं.................. ॥

(गो० सं० २४।१७-१८)

एतत्प्रतीकरूपा एव नव नाथा इति सिद्धसम्प्रदाये प्रसिद्धिः। सामान्योऽपि भारतीयः चतुरशीति सिद्धाः, द्विपञ्चाशद्वीराः, चतुःषष्टिर्योगिन्यः, नव नाथा इति रूढ्या परम्परा-

प्रचलितया परिचितो भवति । तत्र के ते नव नाथा इत्यत्र ग्रन्थकृतां परस्परं नैकमत्यं दृश्यते । महार्णवतन्त्रे नवनाथानां पृथक् दिक्षु न्यासविधानं कृतं तदनुसारं च नव नाथा इमे—

१. गोरक्षनाथः २. जालन्धरनाथः, ३. नागार्जुनः, ४. सहस्रार्जुनः, ५. दत्तात्रेयः, ६. देवदत्तः, ७. जड़भरतः, ८. आदिनाथः, ९. मत्स्येन्द्रनाथश्च ।

योगिसम्प्रदायाविष्कृतिग्रन्थे नवनारायणा एव नवनाथरूपेणावतीर्णाः, येन च नारायणेन यो नाथावतारो धृतः स इत्थम्—

| | | | |
|---|---|---|---|
| १. | कविनारायणः | — | मत्स्येन्द्रनाथः |
| २. | करभाजननारायणः | — | गहिनीनाथः |
| ३. | अन्तरिक्षनारायणः | — | ज्वालेन्द्र( जालन्धर )नाथः |
| ४. | प्रबुद्धनारायणः | — | करणिपानाथः |
| ५. | आविर्होत्रनारायणः | — | नागनाथः |
| ६. | पिप्पलायननारायणः | — | चर्पटनाथः |
| ७. | चमसनारायणः | — | रेवानाथः |
| ८. | हरिनारायणः | — | भर्तृनाथः |
| ९. | द्रुमिलनारायणः | — | गोपीचन्द्रनाथ इति । |

सुधाकरचन्द्रिकायां निर्दिष्टा नामावलिस्त्वित्थम्—

१. एकनाथः, २. आदिनाथः, ३. मत्स्येन्द्रनाथः, ४. उदयनाथः, ५. दण्डनाथः, ६. सत्यनाथः, ७. सन्तोषनाथः, ८. कूर्मनाथः, ९. जालन्धरनाथः ।

उपर्युक्तोभयोरपि ग्रन्थयोर्गोरक्षनाथस्य नाम न विद्यते, योगिसम्प्रदायाविष्कृतौ तु नवनाथोत्पत्त्यनन्तरं महादेवेन गोरक्षनाथ उत्पादित इति स्पष्टमेवोक्तम् । प्रकृतग्रन्थे ( गोरक्षसिद्धान्तसंग्रहे ) तु नामावलिरित्थम्—

१. आदिनाथः, २. मत्स्येन्द्रनाथः, ३. उदयनाथः, ४. दण्डनाथः, ५. सत्यनाथः, ६. सन्तोषनाथः, ७. कूर्मनाथः, ८. भवनार्जिः, ९. गोरक्षनाथः ।

परन्तु नाथपरम्परानुयायिनो नवनाथरूपेषु यासां मूलदेवतानां ध्यानं कुर्वन्ति ता इत्थम्—

| | | | |
|---|---|---|---|
| १. | आदिनाथः | — | महादेवः |
| २. | उदयनाथः | — | पार्वती |
| ३. | सत्यनाथः | — | ब्रह्मा |
| ४. | सन्तोषनाथः | — | विष्णुः |
| ५. | अचलनाथः | — | पतञ्जलिः |
| ६. | कन्थड़िनाथः | — | गणेशः |
| ७. | चौरङ्गिनाथः | — | चन्द्रः ( पूर्णकलः ) |
| ८. | मत्स्येन्द्रनाथः | — | मत्स्यावतारः |
| ९. | गोरक्षनाथः | — | सदाशिवः |

[ महादेवः—शिवः सदाशिवश्च पृथक् तत्त्वद्वयमिति संप्रदायसिद्धम् । ]

## स्थितिकालविषये किञ्चित्

पाश्चात्त्यशिक्षाप्रभावितेषु आधुनिकभारतीयग्रन्थकर्तृष्वपि नूतनोऽयं व्याधिः संक्रान्तो यत् कस्यापि पूर्ववर्तिनः कवेर्महापुरुषस्य वा चर्चायां "स कदा प्रादुरभवत् कदा च तिरोभूतः" इति विचारणायामेव तेषां ज्ञानस्याधिकोंऽशः व्यतीयते, तत्र च यानि प्रमाणानि दीयन्ते तानि केवलं कल्पनामाधृत्यैव । आङ्ग्लशासनस्यायं दुष्प्रभावोऽस्मद् देशे । यतो हि तेषामाङ्ग्लानां केवलं द्विसहस्रवर्षात्मकः खीष्टानन्तरवर्ती इतिहासो वर्तते । फलतः अनयैव स्वीयया तुलया ते समग्रस्य विश्वस्य सभ्यतां संस्कृतिञ्च तोलयितुं वाञ्छन्ति । अस्माकं भारतस्य तु स्थितिरतो नितरां भिन्नैव । सृष्टेरादिकालादारभ्या-द्यावधिकोऽस्माकं प्रामाणिकः स्वीयेतिहासः स्वीया च संस्कृतिः । भारतीयैर्विद्वद्भिः कालाय किमपि महत्त्वं न दीयते । एते जीवनस्योपयोगितां स्वीकुर्वन्ति न तु जीवन्याः । बहवो महर्षयो महापुरुषाः कवयः शास्त्रप्रणेतारश्चाभवन्, ते वाञ्छेयुश्चेत् स्वप्रणीतग्रन्थेषु स्वकीयं परिचयं स्थितिकालं वाऽनायासेन दद्युः, किन्तु तैर्न स्वीकृतं तस्य किमप्युपयोगित्वम्, तेषां मतेन महत्त्वमासीद् ग्रन्थेषु प्रतिपादितानां सिद्धान्तानाम् । केवलं तत्रैव तैः स्वविद्वत्त्वं प्रकटितम् ।

अस्तु, नाथपरम्परायां प्रादुर्भूताः सिद्धा अपि नैतदपवादभूताः, पाश्चात्त्यैराधुनिक-भारतीयैश्च विद्वद्भिर्मत्स्येन्द्रनाथगोरक्षनाथादीनां स्थितिकालः खीष्टाष्टमशतकाद् द्वादशशतकं यावद् मध्यवर्तीतैर्मन्यते, वैयक्तिकरूपेण मम तु मतमस्मान्नितरां भिन्नमेव । मन्ये नैतेषां कोऽपि कालः स्थिरीकर्तुं शक्यते, अत्र च हेतुः—

एकत्र तु वयं भारतीयशास्त्राणां प्रामाण्यमुद्घोषयामोऽपरत्र तेषु यल्लिखितं तत्र न विश्वसिमः । यथाऽमुकस्य रसस्य रसायनस्य वा सेवनेन अथवा योगसाधनायास्तन्त्रसाधनाया वाऽमुकप्रक्रियया मानवः शतायुः सहस्रायुरजरोऽमरो वा भवतीत्यादि । अतीव हास्यास्पदेयं स्थितिरस्माकं यदि वयं स्वीकुर्महे यन्नाथमार्गीयसिद्धान्ते जीवन्मुक्तिरेव कैवल्यं न तु विदेह-मुक्तिः, मन्यामहे च षडङ्गयोगेन सह नेति-धौतीत्यादिषट्कर्मद्वारा कायशोधनं कृत्वा रसादि-पारदादिप्रक्रियाभिश्चैते देहं तामवस्थां प्रापयन्ति यत् स जरां व्याधिं मृत्युं वा जयेत्, तदा एतत्स्वीकरणे कास्माकं विप्रतिपत्तिर्यद् गोरक्षनाथादयो महासिद्धाः शत-सहस्रायुषोऽमरा वा भवितुं शक्नुवन्ति, इति ।

एतत्तु समीचीनं यत्. नाथमार्गस्थाः सर्वे सिद्धास्तामवस्थां न प्राप्नुवते किन्तु विशिष्ट-साधनापराणां महापुरुषाणां विषये तु वक्तुं शक्यत एव ।

अत्रेदमपि विशेषेण विचारणीयं भवति यद् गोरक्षनाथो मत्स्येन्द्रनाथो जालन्धरोऽन्यो वा सिद्धो दिवसैकस्य कृतेऽपि क्वापि प्रकटितः कुत्रापि विहृतवांश्चेत्तत्र तस्य किमपि स्मारकं चिह्नमवश्यं वर्तते । स्वजीवनकाले ये सिद्धा इयतीं प्रसिद्धिमुपगता, यत् समग्रेऽपि भारते शत-

शस्तेषां साधनास्थलानि, विहारभूमयः, चमत्कारक्षितयश्च दृश्यन्ते किन्तु तैः कुत्रापि जीवनस्येहलीला समापितेति सूचकं समाधिस्थलं न क्वचिद् दृश्यते न च श्रूयते। यैः समग्रमपि भारतं परिक्रान्तं कोटिशो येषामनुयायिन आसन् ते तूष्णीं क्वचिद्देहं जहुरिति प्रत्याययितुं नास्मच्चेतः प्रभवति। अतो बलाद्बाध्या वयमेतद्विश्वसितुं यत् ते जितमृत्यवः कस्मिन्नपि काले कस्मिन्नपि देशे केनापि रूपेण प्रकटितुं समर्था भवन्तीति नात्र सन्देहः कर्तव्यो न चाश्चर्यमिति।

## तन्त्रशास्त्रेण सम्बन्धः

इदानीन्तनैर्ग्रन्थकृद्भिः कैश्चिन्नाथसिद्धेषु शैवतन्त्राणामपरैश्च शाक्ततन्त्राणामन्यैश्च बौद्धतान्त्रिकाणां प्रभावोऽस्तीति प्रकटितम्, किन्तु कल्पनैव तेषामेषा। नाथमार्गीयाः सिद्धास्तन्त्रस्याप्युपासका अभवन् इति तु तथ्यम्। अनयोर्मार्गयोः कस्तावत्सम्बन्ध इति विचारणायां गोरक्षसिद्धान्तसंग्रहकृता दत्तमुत्तरम् ( द्रष्टव्यं १४ पृष्ठे ) तस्यायमभिप्रायो यत् 'नाथमार्गो यद्यपि विशुद्धयोगसाधनापरस्तथापि कौलकापालिकादयोऽपि मार्गा नाथेनैव प्रकटिताः" इति। अयमत्राशयः—अन्तरङ्गसाधनापरो योगमार्गः, बहिरङ्गसाधनापरश्च तन्त्रमार्गः। बहिरङ्गसाधनां विना नान्तरङ्गसाधना सिद्धयति। अतः केनापि साधकेन प्रथमं बहिरङ्गसाधनायाः कोऽपि प्रकारोऽवश्यं स्वीकर्तव्य इति कृत्वा भगवता आदिनाथेन शैवानां शाक्तानां च तन्त्राणां प्रवर्तनं विहितम्। एषु साधकः स्वयोग्यतानुरूपं शक्त्यनुरूपं प्रवृत्त्यनुरूपं वा कमपि मार्गमुपचिनोति, तेन च मार्गेण बहिरङ्गसाधनां समापयन् सोऽन्तरङ्गसाधनाभिमुखो भवति। नास्ति किमपि बन्धनं तस्मै यत् सोऽमुकसाधनामेवाङ्गीकुर्यादिति। मत्स्येन्द्रनाथो योगिनीकौलाख्यस्य सम्प्रदायस्य प्रवर्तक एवासीदिति प्रसिद्धिः, किन्तु भगवता गोरक्षनाथेन गोरक्षसंहितायां प्रतिपादितः सिद्धान्तस्तस्माद् भिन्न एवास्ति। एवं जालन्धरनाथादीनामन्येषामपि पन्थानः सन्ति, परन्तूद्देश्यं सर्वेषामेकमेव, बहिरङ्गसाधनां कुर्वन्तस्ते तां स्थितिं प्राप्नुवन्ति यदन्तरङ्गसाधनायामनायासेन प्रवृत्ता भवेयुः। एतत्तु साधकस्य योग्यतां साधनां चापेक्षते यत् स कियता श्रमेण कालेन वा तामवस्थां प्राप्नोतु। उच्चैःकोटिकाः साधका एव बहिरङ्गसाधनां निस्तीर्य योगभूमिं प्राप्नुवन्ति, न्यूनकोटिकास्तु कौला कापालिका अन्ये वा भूत्वैव तिष्ठन्ति।

## दार्शनिकं स्वरूपम्

अयं च नाथमार्गो विशुद्धयोगसाधनापर इति निर्विवादम, पाशुपतैः सहास्य न कोऽपि सम्बन्धः प्रतीयते किन्तु रसेश्वरैः सह वर्तते इति बहूनां नाथसिद्धानां रसविषयकैरतीवमान्यतांगतैः प्रसिद्धग्रन्थैः प्रतीयते। यथा सिद्धनागार्जुनस्य "नागार्जुनतन्त्रम्", नित्यनाथस्य "रसरत्नाकरः", शालिनाथस्य "रसमञ्जरी", मन्थानभैरवस्य "रसरत्नम्", स्वयं गोरक्षनाथस्य "गोरक्षसंहिताया भूतिप्रकरणम्", अन्ये च भूयांसो ग्रन्था दृश्यन्ते, चर्पटनाथस्य रससिद्धत्वं विश्रुतमेव। एतन्मार्गीया सिद्धाः आगमनिर्दिष्टामेव योगसाधनां विदधति, योगसाधनैवास्य

मतस्यादिर्मध्योऽन्तश्च । इयं चैतेषां साधना पातञ्जलयोगस्यैव विकसितं रूपमुच्येत चेन्मन्ये न कापि विप्रतिपत्तिः । अस्मिंश्च पथि ऊर्ध्वरेतस्त्वं सर्वातिशायि ।

वामश्च मार्ग ईश्वरं वदति, अतस्तत्रेश्वरः सदिति मन्यते, बौद्धाश्चानीश्वरवादिनोऽतस्तत्रेश्वरः शून्यमसद्वा, किन्तु नाथास्तं सदसदुभाभ्यां व्यतिरिक्तं मन्यन्ते । उपनिषदां "नासदासीन्नो सदासीत्" इति सिद्धान्तः पूर्णतया तैरङ्गीकृतः । गोरक्षनाथस्योक्तिः श्रूयते—

बस्ती न शुन्यं शुन्यं न बस्ती अगम अगोचर ऐसा ।
गगनशिखर महं बालक बोलेहुं ता का नाम धरहुगे कैसा ॥ गोरख-शबद ॥

एभिर्मन्यते परमात्मा केवलोऽस्ति ( न सत् न चासत् ) । अनेन परमात्मना जीवस्य यः कोऽपि सम्बन्धो भवेत्, तस्य तेन सम्मिलनमेव योगः कैवल्यं मोक्षो वा । अस्य च कैवल्यस्य अस्मिन्नेव जन्मनि अनेनैव देहेनानुभूतिर्भवेदित्येतेषां चरमं लक्ष्यभूतम् । अस्य लक्ष्यस्य प्राप्त्यै कायसाधनं प्रथमं सोपानम् । एते सिद्धाः कायं शत्रुवन्न क्लेशयन्ति, न च विषयेष्वासक्ताः सन्तस्तमखलीनं मुञ्चन्ति, प्रत्युत देहं परमात्मन आवासं मत्वा तदनुरूपां साधनां कुर्वन्ति, अनेनैव देहेन कैवल्यमनुभवन्ति, जन्ममरणजीवनान्यधिकुर्वन्ति, जराव्याधिकालादीन् निर्जित्य तिष्ठन्ति, कायशोधनरूपस्योद्देश्यस्य पूर्त्तये योगाङ्गैर्यमनियमादिभिः सहैते षट्कर्माणि ( नेति-धौति-वस्ति-नौलि-कपालभाति-त्राटकाख्यानि ) अपि कुर्वन्ति । विशुद्धहठयोगस्य राजयोगस्य च क्रियाकलापमस्मिन् मार्गेऽनुशिष्टं वर्तते ।

योगसाधनायाः प्रतीकरूपेणैते मुद्रां विभूतिं नादमादेशं च बाह्यस्वरूपेऽपि धारयन्ति । गुरोरेवात्र सर्वाधिकं महत्त्वं वर्तते । नाथस्वरूपेणावस्थानमेव मुक्तिः ।

एवमस्य नाथमतस्य बाह्यमाभ्यन्तरं च स्वरूपं बहुधा महत्त्वपूर्णं विवेचनार्हं च किन्तु विस्तरभयान्नात्राधिकं विविच्यते, अतः परं नाथसाहित्ये केषाञ्चिद् ग्रन्थानां नामान्युट्टङ्कितानि तेभ्यः पूर्णतयाऽस्य स्वरूपावगतिर्जिज्ञासुभिः कर्त्तव्येति निवेद्यते ।

## नाथसाहित्यम

यद्यपि भारतीयवाङ्मयस्य विपुलोंऽशो नाथसाहित्येऽन्तर्भवति, यतो हि पातञ्जलं योगदर्शनमस्याधारभूतमेव, हठयोगस्य प्रक्रिया अप्यङ्गभूताः, रसशास्त्रेण प्रत्यक्ष एव सम्बन्धः, कुलागमादिकमप्यनेन संपृक्तमिति कृत्वा सर्वमेतद्विषयकं साहित्यं नाथसाहित्यमेवेति वक्तुं शक्यते तथापि प्राचीना अर्वाचीनाश्च केचन ग्रन्थाः सन्ति येषामध्ययनेनास्य मतस्याध्यात्मिकी व्यावहारिकी साम्प्रदायिकी, ऐतिहासिकी च स्थितिर्ज्ञातुं शक्यते, तेषु केषांचिन्नामावलिरत्र दीयते—

अमनस्कयोगः
अमरौघशासनम्
अवधूतगीता
आदिनाथसंहिता
कौलज्ञाननिर्णयः
कौलावलीतन्त्रम्
कौलावलीनिर्णयः
कौलोपनिषत्

क्षुरिकोपनिषत्
खेचरीसंहिता
गरीबनाथसंहिता
गोरक्षकल्पम्
गोरक्षकवचम्
गोरक्षकौमुदी
गोरक्षगीता
गोरक्षनाथस्तोत्रम्
गोरक्षपद्धतिः
गोरक्षमञ्जरी
गोरक्षशतकम्
गोरक्षसंहिता ❋
गोरक्षसिद्धान्तसंग्रहः
गोरक्षोपनिषत्
गोरखबानी ( - सबद )
घेरण्डसंहिता
चतुरशीतिसिद्धानामितिहासः (मानसिंहकृतः)
जालन्धरसंहिता
घोरंगनाथकथा
नवनाथकथा
नाथचरितम्
नाथतीर्थावलिः
नाथपुराणम्
नाथसूत्रम्
निरञ्जनपुराणम्
पृथ्वीनाथसंहिता
बाधूलनाथसूत्रम्
भर्तृहरिसंहिता
मत्स्येन्द्रसंहिता
महार्थमञ्जरी
महेशसंहिता
मेघमाला
योगबीजम्
योगमञ्जरी
योगशास्त्रम्
योगिनरहरिनाथप्रभृतिभिःसंपादिता योगप्रचारिणी सभा काशीतः प्रकाशिताः प्रायः पञ्चाशद् ग्रन्थाः
योगिवंशावली
योगिसम्प्रदायाविष्कृतिः
वर्णरत्नाकरः
विवेकमार्तण्डः
शिवसंहिता
सिद्धकोशः
सिद्धसिद्धान्तपद्धतिः—गोरक्षनाथकृता
सिद्धसिद्धान्तपद्धतिः—नित्यनाथकृता
सिद्धसिद्धान्तसंग्रहः
सुधाकरचन्द्रिका
हठयोगप्रदीपिका
हठयोगरत्नावली
हठसंकेतः—गोरक्षनाथकृतः

❋ अस्य ग्रन्थस्य पुष्पिका ( COLOPHON ) एवं वर्तते—

"इति श्रीमहामन्थानविनिर्गते सप्तकोटचर्बुदे स्वच्छन्दशक्त्यावतारिते गोरक्षसंहितायां शतसाहस्रखण्डान्तर्गते श्रीमतोत्तरखण्डे कादिभेदे कुलकौलिनीमते नवकोटचवतारभेदे श्रीकण्ठनाथावतारे विद्यापीठे योगिनीगुह्ये............नाम.................. पटलः।"

एतेन प्रतीयते कियद्वैशद्यमस्य ग्रन्थस्य भवेत् कियांश्च विषयोऽत्र प्रतिपादितः स्यादिति। एतदन्तर्गतस्य कादिप्रकरणस्य कश्चित्खण्डितोंऽशो मयाधिगत आसीत् कश्चिच्च त्रुटितोंऽशः सरस्वतीभवनग्रन्थालये विद्यते, उभयोर्मिलित्वापि ग्रन्थस्तु पूर्णो नाभवत्, किन्तु प्रायः षट्सहस्रमिताः श्लोका उपलब्धाः, अतीव दुर्लभस्यास्य तादृशस्यैव प्रकाशनं वाराणसेय-

इदानीन्तनैरपि लेखकैरत्रविषये बहुविवेचितम्, तत्र विशेषेण द्रष्टव्यम्—

नाथ सम्प्रदाय —डा० हजारीप्रसाद द्विवेदी
नाथसिद्धों की बानियाँ —,, ,,
नाथसंप्रदायेर इतिहास, दर्शन ओ साधना— डा० कल्याणी मल्लिक
सिद्धसिद्धान्तपद्धति एण्ड अदर वर्क्स आफ नाथयोगीज —डा० कल्याणी मल्लिक
कौलज्ञाननिर्णय भूमिका —डा० प्रबोधचन्द्र बागची
नाथ और सन्तसाहित्य का तुलनात्मक अध्ययन —डा० नगेन्द्रनाथ उपाध्याय
गोरखनाथ और उनका युग —डा० रांगेयराघव
गोरखबानी —डा० पीताम्बरदत्त बड़थ्वाल
नाथयोग —प्रो० अक्षयकुमार बनर्जी
गोरखनाथ एण्ड कनफटा योगीज़ —डा० ब्रिग्स

एतदतिरिक्तं म० म० डा० गोपीनाथ कविराज महोदयैः, योगिराज श्रीनरहरिनाथ-राहुल सांकृत्यायन–शिवकुमार 'मानव' प्रभृतिभिः भूयसां ग्रन्थानां भूमिकासु, लेखरूपेण विविधपत्रिकासु च पर्याप्तं साहित्यं प्रकाशितं विद्यते ।

## गोरक्षसिद्धान्तसंग्रहः, प्रस्तुतसंस्करणञ्च

लघुकलेवरोऽप्ययं ग्रन्थः स्वस्मिन् जनानां कियदुपकरोतीति तु स्वसंवेद्यमेव वर्तते । भगवता गोरक्षनाथेनान्यैर्वा सिद्धैर्महापुरुषैर्विद्वद्भिश्च प्रणीता यावन्तो ग्रन्था दृश्यन्ते ते सर्वे प्रायः साधनोपयोगिविधिपरा एव । यतोहि व्यावहारिकतत्थ्यानामपि तेषु तदुपयोगार्हाणामेव संकलनं वर्वर्ति, नाथमार्गीयदार्शनिकविचाराणां लौकिके सामाजिके वा जीवने कियानुपयोगो भवितुं शक्नोतीतिप्रतिपादकास्तु ग्रन्था प्रायोऽङ्गुलिगणनीया एव । एतद्दृष्ट्याऽस्य महनीयं महत्त्वं वर्तते । अत्र प्रतिपादिता विषयास्तु विषयसूचीतोऽवगन्तव्याः, विशेषेण गुरोर्महत्त्वम्, नाथलक्षणम् , मुक्तेर्नाथस्वरूपेणावस्थितिः, योगप्रशंसा, योगिनां चिह्नानि तेषामाध्यात्मिकं रहस्यम् , वेदानां तन्मूलकशास्त्राणां च प्रवृत्तिनिमित्तत्वम् , ज्ञानोपासनयोर्योगसाधनत्वनिरासः, द्वैताद्वैतयोर्व्यर्थता, अद्वैतपराजयः, नाथस्य तन्त्रप्रवर्तकत्वम्, ज्ञानिनो मरणोत्तरगतिः सर्वदर्शनानां स्वरूपदर्शने समन्वयः, मुद्राणामवस्थानां च भेदाः, नाथसिद्धान्तस्य स्वरूपं तन्महत्त्वञ्च, नाथपरम्परा, नाथाम्नायवर्णनम् शिष्यस्य ३२ गुरोश्च

---

संस्कृतविश्वविद्यालयीयप्रकाशनविभागतः क्रियते । सम्प्रति भूतिप्रकरणमप्युपलब्धम्, [ योगप्रकरणं च १८६५ खीष्टे श्रीप्रसन्नकुमारवन्द्योपाध्यायेन वंगानुवादेन सह प्रकाशितमासीत, तदपीदानीं दुर्लभमेव ] अतः अस्य प्रकरणद्वयस्य मुद्रणं चात्र समाप्तप्रायमेवाचिरात् पाठकानां दृष्टिपथमुपयास्यतीति निवेद्यते ।

१६ लक्षणानि, सिद्धानामाचारविधिः, देवानां भगवत्तानिरासो नाथस्य सर्वोपरिवर्तित्वम्, योगस्यात्मधर्मत्वनिरूपणं चेति विशेषेण द्रष्टव्या वर्तन्ते। एतत्प्रसङ्गेनावान्तरविषयाणामपि प्रचुरतयात्र संनिवेशोऽस्ति।

अस्य च ग्रन्थस्य प्रणेता नाम्ना अज्ञातोऽपि नातिप्राचीन इति तदीयोद्धृतप्रमाण-ग्रन्थसूचीतः प्रतीयते। किन्तु विपश्चिद्वरेणानेन यया रीत्या स्वकीयो विषयः प्रतिपादितः यावन्ति च प्रमाणानि स्वमतपोषकाणि ग्रन्थान्तरेभ्य उद्धृतानि तैरस्य बहुश्रुतत्वं प्रौढं पाण्डित्यं च स्फुटं परिलक्ष्यते।

अस्य ग्रन्थस्यैकामपूर्णां मातृकामुपलभ्यातीवमहत्त्वपूर्णेति मत्वा श्रद्धेय म० म० गोपीनाथकविराजमहाभागैः सम्पाद्य सरस्वतीभवनग्रन्थमालायां प्रकाशितमेकं संस्करणम्, तदपि बहुवर्षेभ्यो दुष्प्रापमेव। ममैकेन मित्रेण पुस्तकान्तरभ्रान्त्या स्वीयैकामातृका मह्यमुपदर्शिता. पूर्वसंस्करणापेक्षया तस्याः पाठो मया बहुत्रशुद्धोऽधिकश्च व्यलोकि, अतो यथामति संशोध्य शुद्धमुचितं च पाठं मूले संस्थाप्य तदितरपाठश्च टिप्पण्यां दत्तः। मूलग्रन्थे येषां ग्रन्थानमुद्धरणानि सन्ति तानि प्रकाशितेभ्योऽप्रकाशितेभ्यश्च सम्यङ्मेलयित्वा तेषामङ्क संख्यापि यथोपलब्धा दत्ता। एवं यथामति यथासंभवं च कृतेऽपि संशोधने व्यस्ततावशात् मानवस्वभावसुलभचपलतया च यास्त्रुटयः स्युस्ता ममानवधानमिति क्षन्तव्याः संशोध्याश्चेति भूयोभूयः प्रार्थये कृपाधनान् विदुषः—

सरस्वतीभवनम्
मकरसंक्रान्तिः सं० २०२९

विद्वच्चरणचञ्चरीकः
जनार्दनशास्त्री पाण्डेयः



## Prefatory Note

The following pages, which embody the doctrines of Gorakṣanātha and the Nātha sect in general and represent an ancient collection of essays by members of the same sect, are presented to the public for the first time, I believe, in the hope of removing a long-felt want. The study of Nāthism—so it is called by Mahāmahopādhyāya Haraprasad Śāstri who had occasions to write upon the subjects more than once—has been suffering for a long time from paucity of adequate literary data. Besides the Haṭhayoga Pradīpikā, Gorakṣa Śataka, Gorakṣapaddhati, Gheraṇḍa Saṁhitā, and more, very little is known of the Sanskrit Literature of the Nāthas. The contributions of Wilson, Akṣayakumāra Datta, Farquhar and others have all been consequently more or less incomplete. The publication of the present work, therefore, must be considered as a welcome addition to our Library, specially in view of the fact that it comprises many short tracts attributed to the venerable sages themselves, e.g. Gorakṣanātha, Matsyendranātha, Jalandharanātha, Bhartrihari etc.

The greatest defect in the Sanskrit writings of the sect is the frequent violation of the rules of grammar, metrics etc. Unnecessary repetition, ambiguity of expression and incoherent presentation are also to be noticed. But all these defects, and others not mentioned here and arising from insufficient Mss. materials, are insignificant in comparison with the high importance of the work, from the historical as well as religious and philosophical points of view.

The book is full of inaccuracies. But it has been allowed to come out in its unvarnished form, for the editor has no right to step beyond his limits and introduce corrections or alterations in the

language of the original author. It is hoped, however, that the readers will appreciate this attitude and make allowance for these defects.

Further details regarding the work and the sect will be found in the General Introduction which will follow and in my 'Studies in Nāthism' ( to appear shortly ).

Sanskrit College
Benares

**Gopinath Kaviraj**



# विषय-सूची

॥ ॐ श्रीगणेशाय नमः ॥

॥ ॐ भगवते आदिनाथाय नमः ॥

॥ श्रीगोरक्षनाथो विजयतेतराम् ॥

# ॥ गोरक्षसिद्धान्तसङ्ग्रहः ॥

निर्गुणं वामभागे च सव्यभागेऽद्भुता निजा ॥
मध्यभागे स्वयं पूर्णस्तस्मै नाथाय ते नमः ॥ १ ॥

मुक्ता लुण्ठति पादाग्रे नखाग्रे जीवजातयः ॥
मुक्तामुक्तगतेर्मुक्तः सर्वत्र रमते स्थिरः ॥ २ ॥

वामभागे स्थितः शम्भुः सव्ये विष्णुस्तथैव च ॥
मध्ये नाथः परं ज्योतिस्तज्ज्योतिर्मे तमोहरम् ॥ ३ ॥

अस्मिन्मार्गे सर्वश्रेयोमूलभूतो गुरुरेव, स चावधूत एव नान्यः, स कोऽवधूत इत्यपेक्षायामाह—

वचने वचने वेदास्तीर्थानि च पदे पदे ।
दृष्टौ दृष्टौ च कैवल्यं सोऽवधूतः श्रियेऽस्तु नः ॥

एकहस्ते धृतस्त्यागो भोगश्चैककरे स्वयम् ।
अलिप्तस्त्यागभोगाभ्यां सोऽवधूतः श्रियेऽस्तु नः ॥

सिद्धसिद्धान्तपद्धतौ—

यः सर्वान् प्रकृतिविकारान् अवधुनोतीत्यवधूतः । ( सि० ६।१ )
प्रसरं भासयेच्छक्तिः सङ्कोचं भासयेच्छिवः ।
तयोर्योगस्य कर्ता यः स भवेत्सिद्धयोगिराट् ॥ इति ॥ (सि० ६।६३)

अवधूतगीतायाम्—

आब्रह्मस्तम्बपर्य्यन्तं सम्पूर्णं परमात्मनि ।
भिन्नाभिन्नं न पश्यामि तस्याऽहं पञ्चमाश्रमी ॥ इति ॥

सूतसंहितायाम्—

अतिवर्णाश्रमी प्रोक्तो गुरुः सर्वाधिकारिणाम् ।
न कस्यापि भवेच्छिष्यो यथाऽहं पुरुषोत्तमः ॥
( सू० सं० मुक्ति खं० ५।१४ )

'यथाऽहं पुरुषोत्तमः' इति विष्णुं प्रति शिववचनम् ।

अतिवर्णाश्रमी साक्षाद् गुरूणां गुरुरुच्यते ।
तत्समो नाधिकश्चास्मिल्लोकेऽस्त्येव न संशयः ॥ इति ॥
( सू० सं० मु० खं० ५।१५ )

ब्रह्मबिन्दूपनिषदि—

पक्षपातविनिर्मुक्तं ब्रह्म सम्पद्यते तदा ।
स्वरेण [1]साधयेद्योगमस्वरं भावयेत्परम् ॥
अस्वरेण हि भावेन भावो नाऽभाव इष्यते ।
तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥
( २।६-८, ई० अ० पृ० १२७ )

तत्राऽऽशङ्कते—पक्षपातः क इति ? देहाभिमान एव सः । सोऽपि क इति ? अहं ब्राह्मणोऽहं क्षत्रियोऽहं वैश्योऽहं शूद्रोऽहं पुनरन्त्यजोऽहं ब्रह्मचार्य्यहं गृहस्थोऽहं वानप्रस्थोऽहं संन्यास्यहमुत्तमोऽहं मध्यमोऽहमधम इत्यादि सङ्कल्प एव सः । तं सङ्कल्पं विहाय सर्वव्यापकं परमनाथं याथातथ्येन पश्यत्यथ मुक्तो भवति तादृश एव स्यादिति । तथा च वर्णाश्रमादिव्यवहारमतीत्य नाथं साक्षात्कुर्वतो मुक्तिरिति ।

यदि कोऽपि वदेद्वर्णाश्रमाचारव्यवहारं त्यक्तवतः परमयोगिनो मुक्तिर्भवतु नाम, वर्णाश्रमाचारवतः सा कथं न भवेत् ? "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इत्यादीनि कानिचिच्छास्त्रवाक्यान्यवलम्ब्य वदन्ति चामुको गृहस्थो मुक्तो मुक्तश्चामुको भिक्षुरिति ? तत्रोच्यते—गुणानतीत्यैव मुक्तो भवति[2] न तु गुणाभिमानीति सर्वसम्मतः सिद्धान्तो भवत्येव । वर्णव्यवहारे तु न सम्भवति गुणातीतत्वम् । कथम् ? वर्णमात्रस्यापि गुणनिर्मितत्वादिति । उक्तञ्च गीतायाम्—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम् ॥ ( गी० ४।१३ )

तथा च कथं गुणसत्त्वे मुक्तिरिति ? तत्र वादी वदति—वर्णाभिमानिनः किं न त्यजन्ति गुणानिति ? सत्यम्; यदि गुणांस्त्यजेयुस्तर्हि कथं वर्णसद्भावः ? गुणमूलकत्वादेव वर्णत्वस्य । तथा चाश्रमित्वं स्यात् ? तदा वादी वदति—भवद्भिस्त्वाश्रमिणोऽपि गुणातीतत्वाभावान्मुक्तिर्नेत्युच्यते । सा च भवद्वचनक्रमेण त्वायास्यति । तत्र किमुत्तरमिति ? उच्यते; नैवमाश्रमिणां मुक्तिरायाता । कथम् ? आश्रमाणामपि गुणलेशत्वात्[3] । प्रथमतो वर्णव्यवहारेण गुणभजनम् । गुणवृत्तिषु च सत्त्वगुणवृत्तय

---

१. सन्धयेत्—मु० पा० । २. भवेत्—पा०.
३. गुणमूलकत्वात्—पू० सं०

उत्तमा, रजस्तमोवृत्तयस्ततो निकृष्टा, इति कृत्वा गुणेष्वप्युत्तमादित्वं स्यात्, परन्तु गुणवृत्तित्वं तु सर्वसाधारणमतो नास्ति गुणवृत्तीनां मुक्तिसाधकत्वम्। तत्र दृष्टान्तः--

यथा द्वे स्त्रियौ रूपवत्यौ भवतस्तयोर्द्वयोरपि संयोगे न भवेद्गर्भोत्पत्तिः ? किन्तु तद्धर्मभिन्नत्वेन पुरुषेणैव सा भवेत्, किञ्च सौन्दर्यतारतम्येनैकस्या अपरा अधिका न्यूना वा भवतु नाम, परन्तु भोक्ता तु तयोर्द्वयोरपि पुरुष एव, नास्ति तयोरन्योन्यं भोक्तृभोग्यत्वम्। तथा नास्ति वर्णानां साक्षान्मुक्तिविषयेऽन्योयं गुरुशिष्यत्वम्। किञ्चाश्रमिणोऽपि प्रथमतो वर्णाभिमानेन गुणभाज एवेति चोत्तरत्रापि प्रारब्धमभिमत्य भोगभाजो भवन्ति। तेन च प्रारब्धकर्मणां भोगोऽवश्य इति कृत्वा कर्म्मणां सत्यत्वं तावद् दर्शयति—यतो गुणलेश एतेषामपि न निवृत्तो यतो मुक्तत्वपुरुषार्थविहीनास्तेऽपि नपुंसकप्रायाः सन्तो न मुक्तिस्त्रियमर्हन्ति[१]।

यद्यपि नपुंसकाः पुरुषवेषिणो वर्त्तन्ते, तथापि पुरुषत्वेन सन्ततिसम्पादका न भवन्ति, एवं वेषमात्रेणाश्रमिणोऽपि सम्मानपूजाद्यर्हन्तु नाम गुरुत्वम्। अतो गुणातीतत्वेनात्याश्रमिण एव मुक्तिप्रदगुरुत्वं नान्यस्य कस्यापीति बहुधा शास्त्रे निरूपितम्।

कैवल्योपनिषदि—

विविक्तदेशे सुखमासनस्थः शुचिः समग्रीवशिरः शरीरः।
अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥
(कै० उ० १।५, ई० अ० पृ० १२८)

तेजोबिन्दूपनिषदि—

लोभं मोहं भयं दर्पं कामं क्रोधं च किल्बिषम्।
शीतोष्णे क्षुत्पिपासे[२] च सङ्कल्पं सविकल्पकम् ॥
न ब्रह्मकुलदर्पं[३] च न मुक्तं[४] ग्रन्थसञ्चयम्।
न भयं सुखदुःखं च तथा मानापमानयोः॥
एतद्भावविनिर्मुक्तं तद्ग्राह्यं ब्रह्म तत्परम् ॥ इति ॥
(ते० उ० १२-१४; ई० अ० पृ० २२३)

अमनस्के—

कुलाचारविहीनस्तु गुरुरेको हि दुर्लभः। (अम० २।१७)

इति वर्णाश्रमित्वमुक्तम्। नास्ति वर्णाश्रमाचारे सर्वारम्भपरित्याग इति। पुनः एवं चावधूत एव सन्मार्गदर्शनशीलो भवति। स एव गुरुर्मुमुक्षुभिः कर्तव्यः।

---

१. मुक्तिश्रियम्,-पू० सं०। २. शीतोष्णं क्षुत्पिपासं च-मु० पा०।
३. दर्पं-मु० पा०। ४. मुक्तिग्रन्थि-मु० पा०।

सिद्धसिद्धान्तपद्धतौ—

फलितानेकपुण्यानां मुमुक्षूणां हितावहम् ।
साधनं साधनश्रेष्ठमाह योगमतः परम् ॥

सन्मार्गश्च योगमार्गस्तदितरस्तु पाखण्डमार्गस्तदुक्तमादिनाथेन—

योगमार्गेषु निष्णाता दीक्षिता ये तु[१] दूषकाः ।
ते हि पाखण्डिनः प्रोक्तास्तथा तैः सह वासिनः ॥
योगमार्गात्परो मार्गो नास्ति नास्ति श्रुतौ स्मृतौ ।
शास्त्रग्रन्थेषु[२] सर्वेषु शिवेन कथितं पुरा ॥

विवेकमार्तण्डे—

योगशास्त्रं पठेन्नित्यं किमन्यैः शास्त्रविस्तरैः ।
यत्स्वयं चादिनाथस्य निर्गतं वदनाम्बुजात् ॥[३]

खेचरीसंहितायाम्[४]—

उत्सृज्य सर्वशास्त्राणि जपहोमादि कर्म च ।
धर्माधर्मविनिर्मुक्तो योगी योगं समभ्यसेत् ॥
वर्णाश्रमाभिमानेन वर्तते श्रुतिकिङ्करः ।
अभिमानविहीनस्तु वर्तते श्रुतिमूर्द्धनि ॥
न वेदो वेद इत्याहुर्वेदावेदो निगद्यते ।
परात्मा विद्यते येन स वेदो वेद उच्यते ॥

वर्णधर्मे च सन्ध्या विहिता, तत्प्रतिरूपकमाह—

न सन्ध्या सन्धिरित्याहुः सन्ध्या सन्धिर्निगद्यते ।
सुषुम्णासन्धिगः प्राणः सा सन्ध्या सन्धिरुच्यते ॥

ध्यानबिन्दूपनिषदि—

यदि शैलसमं पापं विस्तीर्णं योजनान्बहून् ।
भिद्यते ध्यानयोगेन नान्यो भेदः कदाचन ॥
( १, ई० अ० पृ० २४५ )

विवेकमार्तण्डे—

द्विजसेवितशाखस्य श्रुतिकल्पतरोः फलम् ।
शमनं भवतापस्य योगं भजत सत्तमाः ॥ ( वि० ६।१ )

---

१. स्तांश्च—पा० ।
२. शास्त्रेष्वन्येषु—मु० पा० ।
३. मुद्रितेषु नोपलभ्यते ।
४. नास्ति—पू० सं० ।

मुण्डकोपनिषद्यङ्गिरसं प्रति शौनकवचनं प्रश्नरूपम्—

"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति ? इति। तस्मै स होवाच—द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति। परा चैवापरा च। तत्रापरा—ऋग्वेदो यजुर्वेदः सामवेदो [1]ब्रह्मवेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमितिहासपुराणं न्यायो मीमांसा धर्मशास्त्राणीति परा यया तदक्षरमधिगम्यत इति।" ( १।३-५; ई० अ० पृ० १४ )

यदक्षरं यया प्राप्यत इत्युक्तं सा योगविद्यैव। कथम् ? श्रुतिस्मृतिपुराणादिसर्वविद्यानामपरविद्यायामेवोक्तत्वाद्योगविद्यायाश्चानुक्तत्वात् पृथक्त्वमर्थात् सिद्धम्। तदुक्तमात्मोपनिषदि—

"अथ परमात्मा नाम [2]यथाक्षरमुपासनीयः। स च प्राणायामप्रत्याहारधारणाध्यानसमाधियोगानुमानाध्यात्मचिन्तकवटकणिका वा श्यामाकतन्दुलो वा बालाग्रशतसाहस्र[3]कल्पनादिभिः स लभ्यते, नोपलभ्यते, न जायते, न म्रियते, न शुष्यते, न दह्यते, न कम्पते, निर्गुणः, साक्षीभूतः शुद्धो निरवयवात्मा केवलः सूक्ष्मो निष्कलो [4]निरञ्जनो [5]निरभिमानः शब्दस्पर्शरूपरसगन्धवर्जितो निर्विकल्पो निराकाङ्क्षः सर्वव्यापी सोऽचिन्त्योऽवर्ण्यश्च, पुनात्यशुद्धान्यपूतानि। निष्क्रियस्तस्य संस्कारो नास्ति ( संस्कारो नास्तीत्येष परमात्मेति )[6]।" ( १, ई० अ० पृ० ४५१ )

सा चामृतबिन्दूपनिषदि स्पष्टमाह—

शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः।
परमं ब्रह्मविद्याया उक्त्वा नान्यमथोत्सृजेत्॥

ॐकारं रथमारुह्य विष्णुं कृत्वा तु सारथिम्।
ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः॥

यावद्रथेन गन्तव्यं तावद्रथपथि स्थितः।
स्थित्वा रथं यथास्थानं रथमुत्सृज्य गच्छति॥

मात्रालिङ्गपदं त्यक्त्वा शब्दव्यञ्जनवर्जितम्।
अस्वरेण मकारेण पदं सूक्ष्मं च गच्छति॥

शब्दादिविषयाः पञ्च मनश्चैवातिचञ्चलम्।
चिन्तयेदात्मनो रश्मीन् प्रत्याहारः स उच्यते॥

प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते॥ इत्यादि यावत्समाप्ति।

---

१. अथर्ववेदः—मु० पा०। २. यथाक्षर—मु० पा०।
३. विकल्पनाभिः—मु० पा०। ४. निर्ममो—मु० पा०।
५. निर्विकारः—मु० पा०। ६. () नास्ति—मु०।

मनुस्मृतौ—

क्षरन्ति सर्वा वैदिक्यो जुहोति-यजति-क्रियाः।
अक्षरं दुष्करं ज्ञेयं ब्रह्म चैव प्रजापतिः॥ (म० २।८४)

उत्तरगीतायाम्—

यथाऽमृतेन[1] तृप्तस्य पयसा किं प्रयोजनम्।
एवं तत्त्वपदे प्राप्ते वेदे नास्ति प्रयोजनम्॥ (१।२२)
पुराणं भारतं वेदा धर्मशास्त्राण्यनेकशः।
पुत्रदारादिसंसारो योगमार्गस्य विघ्नकृत्॥ (३।२)
मुहूर्तमपि योगस्थो नासाग्रे मनसा अपि।
सर्वं तरति पापं च तस्य जन्मशतोद्भवम्॥ (२।१०)
अश्वमेधसहस्राणि वाजपेयशतानि च।
एकस्य ध्यानयोगस्य कलां नार्हन्ति षोडशीम्॥

वायुपुराणे—

ऋचो यजूंषि सामानि वेदोपनिषदस्तथा।
योगज्ञानादवाप्नोति ब्राह्मणोऽध्यात्मचिन्तकः॥

मार्कण्डेयपुराणे—

एतत्ते कथितं ज्ञानं योगं चेमं निबोध मे।
यं प्राप्य ब्राह्मणो[2] योगी शाश्वतान्नान्यतां[3] व्रजेत्॥

एवं बहुधा शास्त्रेषु योगस्य प्रशंसा विदितैव, तस्या दिङ्मात्रमिदं दर्शितम्। तस्य योगस्य लक्षणं तु विवेकमार्तण्ड उक्तम्—

योगं चात्र प्रवक्ष्यामि योगं चाष्टाङ्गसंयुतम्।
संयोगं योगमित्याहुः क्षेत्रज्ञपरमात्मनोः॥
एतस्यैव योगस्य मन्त्रयोगादीन्यङ्गानीति ज्ञेयम्।
सन्मार्गत्वेन योगस्तु सेव्यो हित्वाऽन्यसाधनम्।
मुमुक्षुभिर्यतस्तेषां पदप्राप्तिः परा भवेत्॥
योगिनो वीतसङ्कल्पा निर्द्वन्द्वाः पुण्यदर्शनाः।
योगरत्नकरण्डास्ते जयन्त्यविधिगोचराः॥

तद्वतामेव परमपदप्राप्तिरिति तेषां स्वरूपं प्रशंसां चाह कैवल्योपनिषदि—

विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरः शरीरः।
अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य॥

---

१, घृतेन—मु० पा०। २. ब्रह्मणो—मु० पा०
३. मान्यता—पू० सं०।

हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ।
[1]अनन्तमव्यक्तमचिन्त्यरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥
तमादिमध्यान्तविहीनमेकं [2]विभुं चिदानन्दमरूपमद्भुतम् ।
उमासहायं परमेश्वरं [3]विभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ।
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।
स एव विष्णुः सः प्राणः स आत्मा परमेश्वरः ॥
स एव सर्वं यद्भूतं यच्च भाव्यं सनातनम् ।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥
( कै० १।५-९, ई० अ० पृ० १२८ )

गीतायां च—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ( गी० ६।४६ )

महार्णवे—

योगी ब्रह्मा योगिनो विष्णुरूपं योगी देवो देवदेवो महेशः ।
योगी मोक्षः पूर्णतत्त्वस्वरूपो योगी ध्यानं सृष्टिकर्ता च हर्ता ॥

इत्यादि वचनं सन्दर्भेण योगिनामेव परमश्रेयः ।

तेषां [4]मुख्यचिह्नं किमित्यपेक्षायां मुद्रा-नाद-विभूति-आदेशधारणं मुख्यमिति तत्प्रशंसामाह सिद्धसिद्धान्तपद्धतौ—

मुदमोदे तु रादाने जीवात्मपरमात्मनोः ।
उभयोरैक्यसंभूति[5]र्मुद्रेति परिकीर्तिता ॥
मोदन्ते देवसङ्घाश्च द्रवन्ते सुरराशयः ।
मुद्रेति कथिता साक्षात्सदा भद्रार्थदायिनी ॥ (सि० ६।३०-३१)

तद्धारणं कर्णयोर्विना क्षुरिकां न सम्भवतीति क्षुरिकाप्रशंसामाह क्षुरिकोपनिषदि—

क्षुरिकां सम्प्रवक्ष्यामि धारणां योगसिद्धये ।
[6]सम्प्राप्य न पुनर्जन्म योगयुक्तस्य जायते ॥ इत्यादि ।
( क्षु० १; ई० अ० पृ० २१२ )

बृहदारण्ये—अथात आदेशो नेति नेतीति ।

छान्दोग्ये च—उत तमादेशमित्यादि ।

---

१. अचिन्त्य–मु० पा० । २. कवि–मु० पा० ।
३. प्रभुं–मु० पा० । ४. अमुष्य–पू० सं० ।
५. संवित्तिः–मु० पा० । ६. यां प्राप्य–मु० पा० ।

तेषामन्योऽन्यमन्यत्रापि च यो वाग्व्यवहारस्तमाह—

[ सिद्धसिद्धान्तपद्धतौ—

आत्मेति परमात्मेति जीवात्मेति विचारणे।
त्रयाणामैक्यसम्भूतिरादेश इति कीर्तितः॥
आदेश इति सद्वाणीं सर्वद्वन्द्वक्षयावहाम्।
यो योगिनं प्रतिवदेत्सवेत्त्यात्मानमीश्वरम्॥ इति।

( सि० ६।९४–९५ )

नादधारणमाह गोरक्षोपनिषदि—अनाहतशृङ्गीति। ][१]

तेषां भस्मोद्धूलनमपि तत्त्रिपुण्ड्रमपि च तैर्धार्यमिति तद्धारणप्रकारप्रशंसे प्राह कालाग्निरुद्रोपनिषदि—

"कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छाधीहि भगवंस्त्रिपुण्ड्रं सविधि सतत्त्वं किं द्रव्यमित्यादि प्रश्ने तं होवाच भगवान्—यद्द्रव्यं तदाग्नेयं भस्मसद्यदिदं ब्राह्मणैः परिगृह्य "अग्निरिति भस्म" इत्यभिमन्त्र्य" इत्यादि "प्रकुर्वीत व्रतमेव तच्छाम्भवं समाचरेन्मुमुक्षुर्न भवाय यथा सनत्कुमार" इत्यन्तं "समस्तपातकोपपातकेभ्यः पूतो भवति, तेन सर्वे देवा ध्याता भवन्ति, स सर्वैर्वेदैर्ज्ञातो भवति, स सर्वतीर्थेषु स्नातो भवति, देहं त्यक्त्वा शिवसायुज्यतामेति, न स पुनरावर्त्तते, न स पुनरावर्त्तते, इत्याह कालाग्निरुद्र इति।"[२] ( का० १, ई० अ० पृ० २०० )

तेषामनियत एव व्यवहार इत्याह सिद्धसिद्धान्तपद्धतौ—

कचिद्भोगी कचित्त्यागी कचिन्नग्नः पिशाचवत्।
कचिद्राजा कचाचारी सोऽवधूतो विधीयते॥ ( सि० ६।२० )

एवं सर्वमयः सर्वेभ्यो विलक्षणः पृथगिति बहुधा सिद्धसिद्धान्तपद्धत्यादियोगग्रन्थेषु प्रपञ्चितम्। तद्विशेषं जिज्ञासुभिर्द्रष्टव्यं विस्तरभयान्नात्र लिख्यते। एवञ्च सर्वसाधनशिरोमणियोगमूर्तिभूता अवधूता एव परमपुरुषार्थविचक्षणाः सर्वशिरोमणयो जयन्ति।

सन्मार्गसाधका वर्णाश्रमाचारानपेक्षकाः।
योगिनो ह्यवधूता ये ते संक्षेपान्निरूपिताः॥
परमः पुरुषार्थस्तु मुक्तिरुक्ता ह्यतस्तु सा।
निरूप्यतेऽवधूतानां योगसाधनजं फलम्॥

परमपुरुषार्थस्तु मुक्तिरित्युक्तम्। सा च नाथस्वरूपेणावस्थानम्। तत्स्वरूपं तु गोरक्षोपनिषदि—"अद्वैतोपरि सदानन्ददेवता।"

---

१. [ ] अयमंशो नास्ति पूर्व संस्करणे।

२. मध्ये मध्ये विच्छिद्य गृहीतः पाठः; द्र०–ई० अ० पृ० २००।

ब्रह्मोपनिषदि—

"स्वयममनस्कमश्रोत्रपाणिपादं ज्योतिर्विदितं तत्र लोका न लोकाः, वेदा न वेदाः, देवा न देवाः, यज्ञा न यज्ञाः, माता न माता, पिता न पिता, स्नुषा न स्नुषा, चाण्डालो न चाण्डालः, पौष्कसो न पौष्कसः, श्रमणो न श्रमणः, पशवो न पशवः, तापसो न तापस इत्येकमेव परमिति।" (ई. अ. पृ. १५१)

ब्रह्मविन्दौ च—"नैव चिन्त्यं न चाचिन्त्यमचिन्त्यं चिन्त्यमेव च।" इत्यादि। (२।६; ई. अ. पृ. १२७)

सर्वोपनिषत्सारे—

"कथं बन्धः कथं मोक्षः" इत्यादिप्रश्ने "अनात्मनो देहादीनात्मत्वेनाभिमन्यते सोऽभिमानः, आत्मनो बन्धस्तन्निवृत्तिर्मोक्षः" (१।१; ई. अ. पृ. २१५) इत्यनेन स्वरूपेणावस्थानमिति सिद्धम्। अमनस्के—

भावाभावविनिर्मुक्तं नाशोत्पत्तिविवर्जितम्।
सर्वसङ्कल्पनातीतं परं ब्रह्म[1] तदुच्यते॥ (अम० १।१२)

अवधूतगीतायां च—

अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे।
समं तत्त्वं न विन्दन्ति द्वैताद्वैतविलक्षणम्[2]॥ (१।३६)
यदि सर्वगतो देवः स्थिरः पूर्णो निरन्तरः।
अहो माया महामोहो द्वैताद्वैतविकल्पना॥ (१।६१)

श्रीनित्यनाथकृतसिद्धसिद्धान्तपद्धतौ—

न ब्रह्मा विष्णुरुद्रौ न सुरपतिसुरा नैव पृथ्वी न चापो
नैवाग्निर्नापि वायुर्न च गगनतलं नो दिशो नैव कालः। (१।२)
नो वेदा नैव यज्ञा न च रविशशिनौ नो विधिर्नैव कल्पाः।
स्वं ज्योतिः सत्यमेकं जयति तव पदं सच्चिदानन्दमूर्ते॥ (१।३)

सा मूर्तिः का वा ? तथाह श्रीनित्यनाथकृतसिद्धसिद्धान्तपद्धतौ—

आदिनाथं महासिद्धं शक्तियुक्तं जगद्गुरुम्।
तं वन्दे नित्यतो वक्ष्ये सिद्धान्तं स्वानुभावतः॥

पुनरत्रैव प्रवृत्तौ आदिदेवमेतत्पदेनावस्थानं मुक्तिरिति।

नाथस्य लक्षणं तु राजगुह्ये—

नाकारो नादरूपं च थकारः स्थाप्यते सदा।
भुवनत्रयमेवैकः श्रीगोरक्ष नमोऽस्तु ते॥

---

१. परब्रह्म—पू० सं०; परं तत्त्व—मूलमातृकायां।

२. °विवर्जितम्—मु० पा०।

शक्तिसङ्गमतन्त्रे—

श्रीमोक्षदानदक्षत्वान्नाथ [द] ब्रह्मानुबोधनात् ।
स्थगिताज्ञानविभवाच्छ्रीनाथ इति गीयते ॥

इत्यादीनि वाक्यानि[1] प्रमाणानि । तस्य निदर्शनं शास्त्राणि सूर्यस्य दीपा इव कथं करिष्यन्ति । तत्तु पदं तादृग्योगिनामेवापरोक्षमिति सिद्धान्तः । अन्ये तु मतवादिनस्तत्पदमनालम्बमानाः स्वाभिप्रायानुसारि तत्पदं विधाय विवादभाराक्रान्तमतयः क्लिश्यन्ति न तु शाम्यन्तीत्याह सिद्धसिद्धान्तपद्धतौ—

वेदान्ती बहुतर्ककर्कशमतिर्ग्रस्तः परं मायया ।
भाट्टाः कर्मफलाकुला हतधियो द्वैतेन वैशेषिकाः ।

अन्ये भेदरता विवादविकलास्ते तत्त्वतो वञ्चिताः
तस्मात्सिद्धमतं स्वभावसमयं धीरः परं संश्रयेत् ॥ (सि० ६।७३)

अस्यार्थः—वेदान्ती वेदोत्तरभागशास्त्रवादी अद्वैतवस्तुन्यध्यारोपापवादाभ्यां द्वैतकल्पनां कुर्वन् बहुभिस्तर्कैः कर्कशा कठोरा मतिर्यस्य सोऽत एव परं केवलं ग्रस्तो यतो निर्मायिकं वस्तु वदन् मायादूषणं च तत्र ददाति । पुनः भाट्टाः मीमांसका अनीश्वरवादमारोपयन्तः कर्मफलेष्वेवाकुलिताः सन्तो गतधियो भवन्ति । तथा द्वैतेन द्वैतवादेन वैशेषिका अपि गतधिय एव । तदन्येऽपि ये भेदवादरतास्तेऽपि विवादविकला एव भवन्ति । यत एते तत्त्वतो वञ्चिता भवन्ति न तु तत्त्वमालम्बन्ते इत्यर्थः । तस्मान्महासिद्धानां स्वाभाविकं सहजावस्थामयं मतं धीरः पुमान् संश्रयेत् । तदेव श्रेयस्करमिति मान्यम् ।

साङ्ख्या वैष्णववैदिका विधिपराः संन्यासिनस्तापसाः
सौराश्चीरपराः[2] प्रपञ्चनिरता बौद्धा जिनाः श्रावकाः ।

एते कष्टरता वृथापथगतास्ते तत्त्वतो वञ्चिताः
तस्मात्सिद्धमतं स्वभावसमयं धीरः परं संश्रयेत् ॥ (सि० ६।७४)

अस्यार्थः—साङ्ख्याः प्रकृतिकारणवादिनः कपिलमतानुयायिन इति यावत्, वैष्णवाः पाञ्चरात्राः, वैदिका वेदानुवर्तिनस्ते च विधिपरा वाक्यकोविदा इत्यर्थः । स्पष्टमन्यत् ।

आचार्या बहुदीक्षिता हुतिरता नग्नव्रतास्तापसाः
नानातीर्थनिषेवका जिनपरा मौने स्थिता नित्यशः ।
एते ते खलु दुःखभारनिरतास्ते तत्त्वतो वञ्चिताः
तस्मात्सिद्धमतं स्वभावसमयं धीरः परं संश्रयेत् ॥ (सि०६।७५)

---

१. पुराणवाक्यानि—पू० सं० ।          २. वीरवरा—मु. पा. ।

अस्यार्थः—आचार्या मन्त्रव्याख्यातारो बहुदीक्षिता अग्निहोत्रादिकर्त्तारः, त एवाहुतिपरा न तु तत्त्वपराः, अजिनपरा वल्कलवाससस्ते तीर्थनिषेवका यद्वा जपपराः, शेषं स्पष्टम् । इत्यादि । हठप्रदीपिकायां च—

केचिदागमजालेन केचिन्निगमसंकुलाः[1] ।
केचित्तर्केण मुह्यन्ति नैव जानन्ति शाङ्करीम्[2] ॥ (४।४०)

अस्यार्थः—केचिद्वैखानसाद्यागमोक्ततत्त्वभ्रमास्तत्र तत्त्वाभिमानिनो देहात्मवादिनश्चार्वाकसधर्माणस्ते मनुष्यास्तप्तचक्राद्यङ्किता जीवन्तोऽपि मृतकमिव शरीरं सत्कर्मानर्हं कुर्वाणा देवनिन्दका इति । केचिच्च ऋग्यजुरादिवेदासक्ताः कर्मज्ञानरताः कर्मणैवायुः पूर्णं कुर्वन्ति, अथ च तत्त्ववञ्चिताः साधनेऽशक्तास्ते हि कातर्य्येण प्रारब्धशरणा भूत्वा शरीरसुखार्थमहं ब्रह्मेति वदन्तस्तिष्ठन्ति, तदेवात्मानं चेद्विजानीयादित्यादावुक्तम् । एवं निगमसङ्कुला इति । केचिच्चातर्क्यैश्वर्ये परमपदे वस्तुनि शुष्कतर्कानाश्रित्य पण्डितम्मन्या भवन्तीति कृत्वा शाङ्करीं न जानन्तीति ।

सा शाङ्करी स्तूयते हठप्रदीपिकायाम्[3]—

वेदशास्त्रपुराणानि सामान्यगणिका इव ।
सा पुनः शाङ्करी मुद्रा प्राप्ता कुलवधूरिव ॥

ऋग्यजुरादयो वेदा धर्मार्थकाममोक्षोपदेष्टारो [4]ब्रह्मचर्यगृहस्थवानप्रस्थभिक्षुकाश्रमोपदेष्टारश्च भवन्ति । ते च मुख्ये वस्तुनि गौणत्वमापादयन्त्यमुख्ये च मुख्यत्वमतो यत्र तादृशा अधिकारिणो बहवो लग्नास्ते चोत्तमपुरुषैरसेवनीया द्रव्यस्पृहः प्रवृत्तावेवासक्ता भवन्ति । शास्त्राणि च वैशेषिकादीनि । तैर्भ्रममूलकैः[5] कदापि विश्रान्तिर्नास्ति । पुराणानि च नरानात्मसाधनेष्वशक्तत्वं प्राय आपादयन्ति । यतो बालकानामिव रुचिरतरासु कथासु लोकानां चित्तवृत्तिं गमयन्ति । तेऽपि सर्वे सामान्यगणिका इव भवन्ति । तद्यथा—गणिकागृहे शृङ्गारप्रधाना एव वार्ता मुख्याः स्युरैश्वरी वार्त्ता तु गौणी, ताश्च गणिका बह्व्यो बहूनां धूर्तानां लम्पटानामुपरि चासक्ता भवन्त्यः सत्यवादिनामकामिनां प्रियेश्वरकथानामुपरि नासक्तिं कुर्वन्ति, इति ।

किञ्च इह खलु संसारे योगो भोगश्च द्वौ पदार्थौ स्तः । एतद्द्वयं विना किमपि न स्यात्, सर्वस्याप्येतयोरन्तर्भूतत्वादिति । तयोर्मध्ये योगे लग्ना महासिद्धाः, भोगे तु सर्वे संसारिणः । योगस्य फलं मुक्तिर्भोगस्य तु बन्ध इति । यद्यपि भोगाद्बन्धस्तथापि नानाविलासैर्विषयानन्दं विलुण्ठयति । यदि दुःखमपि भवेत्तर्हि भवतु

१ °सङ्कुलैः–मु० पा० । २. तारकं–मु० पा०,
३. नास्ति–पू० सं० । ४. ब्रह्मचारि–पू० सं० ।
५. श्रमसू०–पू० सं० ।

नामेति। योगिनां तु पुनः प्रथमतः किञ्चिच्छ्रमो भवेत् "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्" इत्याद्युक्तत्वादिति, पश्चात्तु महानानन्दः। तत्र बहवः कथयन्ति—किञ्चिदिति कथं; योगे तु क्लेशोऽधिकतर इत्युक्तम्। तदुपरि मया तु कथ्यते—भो पुरुषाः ! गुरुहीनानां तेषां कष्टं भवेत्; यदा तादृशः पूर्वोक्तः पूर्णो गुरुर्लभ्येत तदा महदपि कष्टं स्वल्पं भवेत्। तत्र दृष्टान्तः यथा महाभारयुक्ता या शिला भवेत् तस्या उत्थापने सहस्राणामपि पुरुषाणां कष्टं भवेत्, सा च बुद्धिमता पुरुषेण कृतकाष्ठादियत्नेनाप्रयासेनैवोत्थाप्यते, तथा गुरुमय्या कुञ्चिकया स्वल्पेनापि कष्टेन सहजसिद्धिर्भवति, यदि च महत्कष्टमपि भवेत् तदा कष्टोत्तरे तु महानानन्दो भवत्येव, यस्त्वखण्डैकनाथरूपो भवति। ब्रह्मविष्णवाद्यधीश्वरो भवति। नानारूपो भवति। ब्रह्मादयः सर्वे तस्य पूजां कुर्वन्ति, योगारूढो नानाभोगान् भुनक्ति, न तु तैर्लिप्यते, योगं विना भोगी रोग्येव स्यात्, भोग्यपि योगी संसारीव दृश्यते, न तु संसारीव बन्धनं प्राप्नोति।

ननु केचिच्छास्त्रिणः कर्माद्युपासनं साधनं कथयन्ति, तदा मया कथ्यते—तेषां कथनं मया न निवार्यते, तदेव कुर्वन्तु नाम, परन्तु तत्करणे फलं किमिति। कथं कर्मणामवधिर्मीमांसकास्ते तु पठनपाठनोत्तरं पठनपाठनदोषनिवृत्त्यर्थमिष्टस्मरणं कुर्वन्ति। यस्य शास्त्रस्य पठने पाठने चापि दोषस्तस्य सेवनेन किं भविष्यति इति। पुनः यं स्वामिनं भजेत् स स्वतन्त्रो भवेत्, यश्च प्रसन्नः स्वयमेव यदिच्छति तद्ददाति मन्त्रिभ्यः। अन्यस्य तु पुरुषस्य न कस्याप्यपेक्षां करोति, अयं देहः कर्मरचितः, कर्माणि च सर्वाणि त्रिगुणानां सन्ति, गुणाश्च मायायाः। एवञ्च यदि अनेन प्राणिना प्रारब्धं कर्माभिमतं तदा मायाऽभिमता, तदभिमाने च तत्रैव समये ब्रह्मतत्त्वात् पृथग्भूतः। ततश्च पूर्वं पश्चादपि गुणलेशो विद्यत एव, स च बाधक एव, तस्मात्प्रारब्धकर्मनिर्मूलकरणमवधूतानामेव कर्म।

वेदान्ती चित्तशुद्ध्यर्थं कर्माभिमत्य तदनन्तरं ज्ञानं साधनमित्युपदिशति, अतः सोऽपि सापेक्ष एव। मीमांसको मन्त्रीव राजसापेक्षः, परन्तु सापेक्षता तूभयोरेवास्ति, कस्याप्यपेक्षामकुर्वन् योग आवश्यकः सर्वेषां कर्तव्यो यः सर्वदा स्वतन्त्रोऽस्ति।

मीमांसको द्वैतमभिमन्यते, वेदान्ती त्वद्वैतमभिमन्यते, तदुपरि च वदामः—एतदुभयमपि प्रकृतिविकारः। प्रकृतिविकारश्च सदा चञ्चलो नास्ति कदापि स्थिरः। ब्रह्म तु सर्वदा स्थिरमेवास्ति। तत्र द्वैतवादिनो निश्चलं नास्तीति वदन्ति, तथैवाद्वैतमभिमन्यतां निश्चलं नास्तीति कथम् ?

यदि ब्रह्माद्वैतमस्ति तर्हि द्वैतं कुत आगतम्? तदा मायाकल्पितमिति ते वदेयुस्तर्हि तान्वदतो वयमवाचोऽक्रियांश्च कुर्मः[1], तत्किमिति चेदुच्यते—अद्वैतं तु

१. कर्म—पू० सं०।

निष्क्रियादि त्याग्यस्ति। यतः कस्यापि वस्तुनो भोगोऽपि युष्माभिर्न कर्तव्य इत्याद्यनेकविधिभिरद्वैतखण्डनं करिष्यामः। महासिद्धैरुक्तम्–यद् द्वैताद्वैतविवर्जितं पदं निश्चलं दृश्यते तदेव सत्यमित्यभ्युपगमिष्यामः, तत्त उग्रभैरवनामककापालिकरूपतः श्रीभैरवेण शङ्कराचार्योपरि कृतम्।

कथम्? चतुर्भिः शिष्यैः संयुक्तः शङ्कराचार्यो नदीतीरे स्थितः। तस्मिन्स्थले कापालिकः समुपागत्योक्तवान्—भो त्वं तु संन्यासी, मित्रारिपक्षे तुल्यः, सुखदुःखादिद्वन्द्वपदार्थरहितोऽस्यस्माकं चायमभिप्रायो वर्त्तते–यत् तव शिर उच्छिद्य[१] पश्चात् श्रीभैरवार्पणं करिष्यामि तदा मम प्रतिज्ञा पूर्णा भविष्यति, अतो भवान् शिरो ददातु–इति। तदा शङ्कराचार्येणालोचितं नैवं करिष्यते तदा त्वद्वैतहानिः शत्रुमित्रपक्षे तुल्यत्वं न स्यात्, कृते च पराजयो भवेत्। एतद्द्वयविचारेऽपि पराजय एवेति मत्वा न किमपि तेनोक्तम्। शैथिल्यं जातम्। तदा [२]पद्मपादाचार्येण नृसिंहस्मरणं कृतम्। उग्रभैरवोपरि नृसिंहेण प्रहारः कृतो यस्तु महासिद्धः तच्छरीरं त्यक्त्वा तादृशमेव च शरीरं गृहीत्वा सम्मुखे संस्थितो भूत्वा प्रसन्नवदनो मेघगम्भीरया गिरोवाच—भो अद्वैतपराजयोऽद्वैतपराजय इति। शत्रुमित्रपक्षे [ तुल्यत्वं यदवदस्तत्कुत्र गतमद्वैतमेवाद्वैतं ] [३]यदवदस्तत्कुत्र गतम्। मदीयं तु यथा मल्लो नियुद्धे स्वयमेव निपत्यान्यस्य पातनं करोति तथा स्वशरीरं त्यक्त्वा परसिद्धान्तहानिः कृतैवेति चरितं पुनः साम्प्रतं त्वदीयहानिरतः परमपि क्रियते। उत्तिष्ठोत्तिष्ठ युद्धं कुर्व[४] इत्याह, तदा प्रारब्धकर्माचरणं वर्त्तते न्यासिनां मते यतः क्रियाकरणमिति सिद्धान्तो नास्तीति कृत्वा युद्धेऽशक्तो जातः। कापालिकोपदेशेनाक्रियैव स्वसिद्धान्तेऽद्वैतस्थितिवत्स्थितः। तदा कापालिकेन योगमाया निर्मिता, तया च चतुःशिष्यसंयुक्तस्याचार्यस्य मस्तकं छिन्नम्, पश्चाच्च सञ्जीवितः कृतस्तर्हि विरागो जातः। पश्चिमायां दिशि गतः शक्तिस्मरणं कृतवान्।

पूर्ववार्त्ता। शङ्कराचार्यस्योत्पत्तिर्दक्षिणस्यां दिशि। तत्र तु कर्मसेवनमेव कृतं विष्णूपासनादि। यदा चित्तशान्तिर्न जाता तदा पृथ्वीपरिक्रमा[५]करणार्थं प्रयाणं कृतम्। पूर्वस्यां दिशि चागत्य तत्र वैद्यनाथाख्यस्थलं गत्वा पूजां चकार। तदेश्वरेण नाङ्गीकृता पूजा। किमर्थं त्वया विष्णुभक्तिः कृता। अहं तु साक्षादीश्वरः स तु त्वया विस्मृत इति। तदा शङ्करेणापराधक्षान्त्येऽपराधक्षमापननामकं स्तोत्रं कृतम्, पुनरपि शिवभक्तिर्विशेषेण कृता, तथापि चित्तशान्तिर्न जाता। पश्चाच्च पश्चिमां दिशं गतस्तत्र शक्तिरहितो जातः, शक्तेर्वृत्तान्तं दृष्टम्। तदा शक्त्योक्तं शिव एव

---

१. उच्छिन्न–पा०। २. पद्माचार्येण–पा०।
३. [ ] नास्ति पू० सं०। ४. कुर्वि°–पू० स०।
५. °प्रदक्षिण° पू० सं०।

सर्वं करिष्यतीति। तेन भयाकुलो जातः। सौन्दर्यलहरीनामकं स्तोत्रं कृत्वा शाक्तो जातस्तथापि पूर्णा शान्तिर्न जाता। तत उत्तरां दिशं गतः। सा तु महासिद्धसमुदायेन सर्वाऽपि दिग्व्याप्ता। यत्र यत्र गतस्तत्र तत्र सर्वैरुपहासः कृतस्तत्र श्रीतारानाथेनोक्तम्–तीर्थाटनमेव करिष्यते किमप्यात्मसाधनमपि करिष्यते ? तदा शङ्करेणोक्तम्–भवद्भिर्यत्कथ्यते तन्मया करिष्यते[१]। तदा महासिद्धेन योगोपदेशः कृतस्तेन सर्वाबाधानिवृत्तात्मा च प्रसन्नो जातस्तदा वज्रसूचिकोपनिषत् कृता। सा तु सर्वाऽपि नाथमार्गानुसारिण्येव। तत्र श्रीसिद्धसिद्धान्तपद्धतिप्रमाणं दत्तं "वेदान्ती बहुतर्ककर्कशमतिः..." इत्यादि "तस्मात्सिद्धमतं स्वभावसमयं धीरः परं संश्रयेत्" इत्यन्तानि पद्यानीति, यथा मण्डनमिश्रः सुरेश्वराचार्यो जातस्तथाऽयमपि सिद्धो भूत्वा सिद्धान्तबिन्दुप्रभृतिग्रन्थांश्चकार

सिद्धान्तस्तु सिद्धस्य तात्पर्यार्थ एव सिद्धान्तो न तु वादि-प्रतिवादिभिर्निर्णीतोऽर्थः सिद्धान्तः। तन्मध्ये न चैकं तदन्यद्द्वितीयं कुतः स्यात्तत्तु द्वैताद्वैतविलक्षणत्वेनैव सिद्धान्तो जातः। न्यासिनां त्वद्वैतमेव सिद्धान्तो भवतीत्येषा रीतिर्ज्ञेया।

अन्यैः सिद्धान्तः कथ्यते। तेषां मुख्ये सिद्धान्तशब्दप्रवृत्तिर्महासिद्धानां मुखादागतोऽन्यमुखे सिद्धान्तः केवलं रूढित एव। सिद्धानां मते रूढिर्यौगिकं च द्वयमपि वर्तते। तर्हि सिद्धान्तः सिद्धस्यैव तात्पर्यम्। एतत्कारणात् सिद्धस्यैव सिद्धान्तो न त्वन्यस्यात एव शङ्करेण सिद्धान्तबिन्दुः कृतः।

प्रथमं तु दक्षिणदेशे कर्मसेवने विष्णूपासना कृता, पश्चात्पूर्वदेशे शिवदर्शने संन्यासो गृहीतः, पश्चिमे च शक्तिदर्शने शाक्तो जातस्तन्त्रविषयकं प्रपञ्चसारादि ग्रन्थं कृतवान्, पश्चादुत्तरदेशे सिद्धोपदेशेनावधूतावस्था गृहीता। तेन सर्वं श्रेयो जातम् इति।

ननु कापालिकप्रसङ्गकथनात्तेषां कापालिकमतमिति कैश्चिज्ज्ञायते, इति; तत्त नास्त्येवास्माकं मतं त्ववधूतमेव। परन्तु कापालिकमपि मतं नाथेनैव प्रकटीकृतमेतन्मार्गस्य प्रकटकर्त्ता नाथ एव। तदुक्तं शाबरतन्त्रे—

आदिनाथो ह्यनादिश्च कालश्चैवातिकालकः।
करालो विकरालश्च महाकालश्च सप्तमः॥

कालभैरवनाथश्च बटुकस्तदनन्तरम्।
भूतनाथो वीरनाथः श्रीकण्ठो द्वादशो मतः॥

---

१. क्रियते–पू० सं०।

एते[1] कापालिकाः प्रोक्ता वीरतुम्बीमहाफलैः ।
शिष्याणां सूर्यसङ्ख्या च तानिहो वच्मि संशृणु ॥

नागार्जुनो जड़भरतो हरिश्चन्द्रस्तृतीयकः ।
सत्यनाथो भीमनाथो गोरक्षश्चर्पटस्तथा ॥

अवद्यश्चैव वैराग्यः कन्थाधारी जलन्धरः ।
मार्गप्रवर्तका ह्येते तद्वच्च मलयार्जुनः ॥

पुनः शैवः शाक्तोऽपि मार्गस्तन्त्रानुसारी । तस्याप्युपदेष्टा नाथ एव । नाथेनैव रचितानि तन्त्राणि । तदुक्तं षोडशनित्यातन्त्रे —

कादिसंज्ञा भवद्रूपा[2] सा शक्तिः सर्वसिद्धये ।
तन्त्रं मदुक्तं भुवने नवनाथैरकल्पयत् ॥

तया तैर्भुवने तन्त्रं कल्पे कल्पे विजृम्भितम् ।
अवसाने तु कल्पानां सा तैः सार्द्धं व्रजेच्च माम् ॥

नामपर्यायतो व्याप्तं कालावाप्तमिदं द्वयम् ।
प्रसिद्धं बाह्यतो यच्च त्रीणि नामानि साधके ॥

नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे ।
विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह ॥

नवाय नवरूपाय परमार्थैकरूपिणे ।
सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते ॥

स्वतन्त्राय दयाशक्तिविग्रहाय रसात्मने ।
परतन्त्राय शाक्तानां भव्याय भव्यरूपिणे ॥

पुनः योगस्तु कस्यापि सापेक्षो नास्ति, परन्तु तान्त्रिकाणामयमेव सिद्धान्तो वर्त्तते यत्रोत्तरावस्थाऽवधूत एव । तदुक्तं षट्शाम्भवरहस्ये—

अथान्यत्सम्प्रवक्ष्यामि सम्प्रदायस्वरूपकम् ।
आदितो वैदिकः प्रोक्तस्ततो हि वैष्णवः परः ॥

ततो गाणपतः प्रोक्तः क्रमेण हि मया तव ।
गाणपत्यं च द्विविधं ततः सौरं प्रकीर्तितम् ॥

सौराच्छ्रेष्ठं शैवशास्त्रं शैवाच्छाक्तं महेश्वरि ।
शाक्ताद्वामं महादेवि श्रेष्ठं ते परिकीर्तितम् ॥

---

१. एके--प० सं० ।     २. भवेद्रूपा-ए० सं० ।

वामात्तु दक्षिणं श्रेष्ठं दक्षिणाद्वीर एव तु ।
अथ वीराच्चावधूतः कौलः पूर्वं प्रकीर्तितः ॥
अवधूताद्दिव्यमार्गो दिव्याच्छ्रेष्ठो न विद्यते ॥ इति ।
( षट्० १।१४०-१४४ )

तान्त्रिकानुष्ठानस्य फलमपि योग एव । योगिनां पूर्वावस्थायामपि योगित्वमुत्तरावस्थायामपि योगित्वमेव न त्ववस्थाभेदाद् गौणमुख्यभावौ । तन्त्रादि यस्य-कस्यापि सापेक्षं, परन्तु तान्त्रिकाणां पूर्वावस्था तन्त्रानुष्ठानं बहिरङ्गमुपासनं, योगिनान्त्वन्तरङ्गमुपासनम् । इयं रीतिस्तान्त्रिकाणाम्–तान्त्रिकः प्रथमतो बहिरङ्गपूजनं स्थूलशक्तेः करोति, पश्चादवधूतपदे प्राप्तेऽन्तरङ्गपूजनं सूक्ष्मशक्तेः कुण्डलिन्याः करोति । अतः कारणात्तान्त्रिकाणामपि तात्पर्यमवधूतपद एव ।

कापालिको मार्गः किमर्थं प्रकटीकृतः ? इत्यपेक्ष्ययाह–विष्णोश्चतुर्विंशतिसङ्ख्याका अवतारा जातास्ते च कार्यान्ते मदोन्मत्ता जाताः । कथम् ? यथाऽन्ते तिर्यग्योनयो जन्तवः क्रीडाः कुर्वन्ति तथा वराहो नृसिंहश्चेत्यादयो भूदारण-वन्य-भयदानादिकरणे प्रवृत्ताः । पुरग्रामादिताडनं केषाञ्चित् समुद्रपातोऽपि । तत्रापि कृष्णेन व्यभिचारिभावो विशेषेण धृतः । परशुरामेणैकक्षत्रियदोषेणानेकेषां क्षत्रियाणां नाशः कृत इत्यादि विरुद्धाचारोपरि नाथेन कोपं कृत्वा चतुर्विंशत्यवतारोपरि चतुर्विंशति कापालिकरूपाणि धृतानि । धृत्वा च चतुर्विंशत्यवतारैः सह समरं कृतम् । तत्र सर्वेषामवताराणां कपालानि छिन्नानि कृतानि । स्वकरैस्तानि धृतानि । तेन कापालिका जाताः । पुनस्ते सर्वे कपालच्छेदान्मदहीना जातास्तदा वरं दत्वा कपालानि तच्छरीरे धृतानि तेन जीविता बभूवुरिति ।

कानिचिच्छास्त्राणि मोक्षरक्षकाणि कानिचिच्च व्यवहाररक्षकाणि । तत्र मोक्षरक्षकाणि श्रुति-स्मृत्यादीनि । मुमुक्षवः पुरुषाः कोटीनां मध्ये द्वित्रा एव भवन्ति, व्यवहारिणस्तु कोटिकोटिरेवातः कारणाद्व्यवहारार्थं विधिवाक्यशास्त्राणि बहूनि सन्ति, कथम् ? व्यवहारिणां बाहुल्यात्, योगशास्त्रं तु सूक्ष्मम् । कथम् ? मुमुक्षुपुरुषाणामल्पत्वात्, वेदादिशास्त्राणामपि योगो वर्त्तत एव, सर्वेषां च तात्पर्यं योग एवास्ति, परन्त्वेतद्रीत्या यथा समुद्रे रत्नानि शङ्खाः, पाषाणखण्डानि, जलं जलजन्तवश्चेत्याद्यनेकवस्तूनि सन्ति, तथा वेदादिशास्त्रेष्वपि योगादीनि सन्ति. समुद्रे चेतरवस्तु सुलभं, रत्नं तु श्रमेण लभ्यते । एवं वेदादिशास्त्रे व्यवहारादि सुलभं, योगस्तु भूरिश्रमेण लभ्यते । योगशास्त्रे तु योग एव लभ्यते, नान्यदस्ति किञ्चिदसारं, यथा रत्नखनौ रत्नमेवेति ।

स च योगो गुरुकृपयाऽल्पश्रमेणैव प्राप्तो भवेदतोऽन्यत्सर्वं परित्यज्य योग एव सेवनीयः, इति । षट्शाम्भवरहस्ये—

पृथ्वी कर्त्री महादेवी नाथाः शास्त्रस्य बन्धकाः ।
ब्रह्मतत्त्वविदित्याद्याः शरभाद्यास्तु रक्षकाः ॥ ( १-१५६ )

ननु श्लोके तु पृथ्वी कर्त्रीत्युक्तं भवद्भिस्तु नाथः कर्त्तेत्युच्यते, तत्कथमिति चेत् ? उच्यते; 'नाथाः शास्त्रस्य बन्धकाः' इत्यनेन शास्त्रप्रबन्धकत्वं तूक्तमेव, पुनः कर्तृत्वं तु पृथिव्या अपि नाथरूपत्वेनैव, चतुरशीतिसिद्धगणनायामादिकुमारीनामकस्य सिद्धत्वेनोक्तत्वात्। सिद्धाश्च नाथरूपत्वेन प्रसिद्धा एवेति। तथैव यत्साधनं कर्त्तव्यं यत्तेनैव साधनेन सिद्धिर्भवेदित्येवं तु योग एव परं साधनमित्याशयेनोक्तम्—

योगमार्गात्परो मार्गो नास्ति नास्ति श्रुतौ स्मृतौ—इति ।

तद्वन्तश्च श्रेष्ठा उक्ता इति सर्वत्र लभ्यते। एवञ्च योगिनः श्रेष्ठास्तेषां श्रैष्ठ्यं गम्यत्वेनाप्याह पद्मपुराणे—

मर्यादां स्थापयामास यथास्थानं यथागुणम् ।
वर्णानामाश्रमाणां च धर्माधर्मभृतां वर ॥
लोकांश्च सर्ववर्णानां सम्यक् धर्मानुपालिनाम् ।
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं तु पार्थिव ॥
स्थानमैन्द्रं क्षत्रियाणां यतीनामूर्ध्वरेतसाम् ।
स्मृतं तेषां तु यत्स्थानं तदेव गुरुवासिनाम् ॥
सप्तर्षीणां च यत्स्थानं स्मृतं तद्वै वनौकसाम् ।
प्राजापत्यं गृहस्थानां न्यासिनां ब्राह्मसंज्ञितम् ॥
योगिनाममृतं स्थानं ब्रह्मणः परमं पदम् ।
एकान्तिनः सदोद्युक्ता व्यापिनो[१] योगिनो हि ये ॥
तेषां तत्परमं स्थानं यन्न[२] पश्यन्ति सूरयः ।
गत्वा गत्वा[३] निवर्तन्ते चन्द्रादित्यादयो ग्रहाः ॥
अद्यापि नो निवर्त्तन्ते प्राणायामपरायणाः ।
( सृष्टिखण्डे ३।१५३-१६१ )

गीतायाञ्च—

वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥ इति
( गी० ८।२८ )

एवं सर्वनमस्कार्यमेतन्मतमिति ।

तत्र यूयं केऽपि वदेत–भवन्मते श्रुतिः साधिका नास्तीति तेषामज्ञात्वा मतरहस्यमेवं वदतां युष्माकं तात्पर्यमस्माभिर्विदितप्रायमेवेति। तदेवमस्ति। एवं प्रतीच्य-

१. ध्यायिनो--मु० पा० ।
२. यत्तत्--मु० पा० ।
३. गता गता--मु० पा० ।

माना अपि कदाचिच्छ्रुत्याश्रयत्वमङ्गीकुर्वन्तु नामैते, किन्त्वेतत्साक्षादनिर्वचनीयं तत्सत्यस्वरूपं तत्त्वं सर्वस्य विदितमेवेति तस्यैव प्रवृत्तिशास्त्राश्रयत्वं केन प्रकारेणाङ्गीक्रियते। यदस्माकमत्र श्रुत्याश्रयाङ्गीकरणं राज्ञामिव मन्त्र्याश्रयाङ्गीकरणं भवति। तथोक्तं महाभारते मोक्षधर्मे—

ऋचो यजूंषि सामानि शरीराणि व्यपाश्रिताः।
जिह्वाग्रेषु प्रवर्त्तन्ते यत्नसाध्याविनाशिनः॥

न चैवमिष्यते ब्रह्म शरीराश्रयसम्भवम्।
न यत्नसाध्यं तद् ब्रह्म नादिमध्यं न चान्तवित्॥

ऋचामादिस्तथा साम्नां यजुषामादिरुच्यते।
अन्तश्चादिमतां दृष्टो न त्वादिर्ब्रह्मणः स्मृतः॥

अनादित्वादनन्तत्वात्तदनन्तमथाव्ययम्।
अव्ययत्वाच्च निर्दुःखं द्वन्द्वाभावस्ततः परम्॥

अन्यच्च—अग्निर्यथाह्युपायेन मथित्वा दारु दृश्यते।
तथैवात्मा शरीरस्थो योगेनैवात्र दृश्यते॥

पुनः—आदिज्ञानी भवेद् ब्रह्मा युगादिज्ञानियोगिनः॥

गीतायाम्—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः॥

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम्।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति॥

भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम्।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते॥ ( गी० २।४२-४४ )

येन च परमवेदप्रणवस्याश्रयोऽङ्गीकृतो वा तेन स्थूलवेदस्याश्रयो नाङ्गीकर्तव्यः।

उत्तरगीतायाम्—

चतुर्वेदविदो विप्राः सूक्ष्मब्रह्म विदन्ति न।
वेदभारभराक्रान्तास्ते वै ब्राह्मणगर्दभाः[1]॥

एतदेवाभिप्रेत्य कावषेयगीतायाम्—दुर्वासा कश्चिन्मुनिर्बहुविधशास्त्रपुस्तकभारैः सह महादेवं नमस्कर्त्तुमागत्य तत्सभायां नारदेन केनचिन्मुनिना भारवाही गर्दभसाम्यमापादितः, कोपात् पुस्तकानि लवणार्णवे परित्यज्य महादेवेनात्मविद्यायां प्रवर्त्तित इति।

१. ते विप्राः पुरुषाधमाः—पू० सं०।

गृहे गृहे पुस्तकभारभाराः पुरे पुरे पण्डितयूथयूथाः ।
वने वने तापसवृन्दवृन्दा न ब्रह्मवेत्ता न च कर्मकर्त्ता ॥

एवं बहवः प्रस्तावाः सन्तीत्येकमुत्तरम् ॥ १ ॥

पुनः भवद्भिस्तु श्रुतयः पुनः पुनरुच्यन्ते, तत्किमिति ? वेदास्तु कर्मनिरूपकास्तदधिकारिणामेवौचित्यं दर्शयन्ति । एते योगिनस्तु संसारत्यागिनो निष्कर्माणः । किञ्च, वेदेषु मुख्यत्वेनाग्निहोत्रादियज्ञकर्माणि दृश्यन्ते, तानि चाग्निसाध्यानि, एते तु नाग्नेः स्पर्शमपि कुर्वन्ति । अग्नेरेव गृहपतित्वमाह--'अग्ने गृहपते' इत्यादि श्रुतिः । यत एतेषां किमाचरणमुपधार्य्यैतान् निरूपयन्ति । बाहुल्येन वेदविदांश्चैते किं प्रयोजनमङ्गीकृत्याङ्गीकुर्युर्वाचोविग्लापनं[1] हितत्' इत्यादि श्रुतिवाक्यैरेव "एवं बिमृश्य सुधियो विरमन्ति शब्दाद्" इत्यादिपुराणवाक्यैरेव च तदनङ्गीकरणं दर्शितम् ।

किञ्च "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" इति श्रुतेः ॥

बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् ।
अन्वेष्टव्यं प्रयत्नेन तत्वज्ञैर्ज्योतिरान्तरम् ॥ इति ।

उत्तरगीतायाम्[2]—

अधीत्य[3] चतुरो वेदान् धर्मशास्त्राण्यनेकशः ।
ब्रह्मतत्त्वं[4] न जानाति दर्वी पाकरसं यथा ॥ इत्यादि ।
( उ० २।४१ )

किञ्चैतेषां सत्यस्वरूपभूतानां महिमानं निरूपयन्तो वेदा मुह्यन्तीव च । अवृत्तिविषयत्वात् । तथा च कर्मकाण्डे मुख्यमपि ज्ञानं[5] न मुख्यत्वेन दर्शयन्ति । दर्शिते च तस्मिन् कर्ममोह एव स्यात् । एवं ज्ञानकाण्डे च योगतन्महिम्नि दर्शिते ज्ञानं मोहः स्यात् । तथा च वेदेषु तन्महिमा नोपलभ्यते-इत्येतदेवाभिप्रेत्योद्योगपर्वणि सनत्सुजातीये प्रोक्तम्—

आभाति शुक्लमिव लोहितमिवाथो कृष्णमायांजनं काद्रवं वा ।[6]
न पृथिव्यां तिष्ठति नान्तरिक्षे नैतत्समुद्रे सलिलं बिभर्त्ति ॥
न तारकासु न च विद्युताश्रितं न चाभ्रेषु दृश्यते रूपमस्य ।
न चापि वायौ न देवतासु नैतच्चन्द्रे दृश्यते नोत सूर्ये ॥
नैवर्क्षु तन्न[7] यजुष्षु नाप्यथर्वसु न दृश्यते वै विमलेषु सामसु ।
रथन्तरे बार्हद्रथे वापि राजन् महाव्रते नैव दृश्येद्ध्रुवं[8] तत् ॥

---

१. विप्लावनं—पू० सं०
२. नास्ति-पू० सं० ।
३. आलोच्य-मु० पा० ।
४. यौ वै ब्रह्म-मु० पा० ।
५. नाज्ञं—पू० सं०
६. कृष्णमायसमर्कवर्णम्-इति मातृका पाठः ।
७. नैतद्य०-मु० पा० ।
८. महाव्रतस्यात्मनि-पा० ।

अपारणीयं[१] तमसः परस्तात् तदन्तकोऽप्येति[२] विनाशकाले ।
अणीयरूपं क्षुरधारया समं[३] महच्चरूपं तद्वै[४] पर्वतेभ्य ॥
( स० ३।२०-२३ )

[५]सा प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः ।
भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र हि ॥ ( स० ४।२३ )

अनामयं तन्महदुद्यतं यशो वाचोविकारं कवयो वदन्ति ।
तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितं ये तद्विदुरमृतास्ते भवन्ति ॥

ननु तद्विदुरित्यनेन योगोपसर्जनं ज्ञानमेवोक्तमिति चेन्नैतस्यैव शास्त्रस्यास्मिमेऽध्याये—

यत्तच्छुक्लं महज्ज्योतिर्दीप्यमानं महद्यशः ।
तद्वै देवा उपासन्ते तस्मात्सूर्यो विराजते ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ( स० ४।१ )

इत्यादि सविस्तरमुक्तमतो ग्रन्थभारवहनं वृथैव । किन्तु तदन्तर्गतं स्वोपयुक्तं सारमात्रं गुरुवाक्याद् गृहीत्वा योगेन कृतकृत्यो भवेदिति—

आत्मनस्तत्त्वमज्ञात्वा मूढः शास्त्रेषु मुह्यति ।
[६]गोपः कक्षागते छागे कूपे पश्यति दुर्मति ॥

वदन्तो वाऽऽत्मनोभावं [७]वदन्त्युपनिषद्गिरः ।
रहस्युपदिशन्त्यन्ये स्वयं नानुभवन्ति ते ॥

विहाय योगशास्त्राणि नाना गुरुमतानि च ।
अहङ्कारावृताः केचिज्ज्ञात्वा शास्त्रसमुच्चयम् ॥
उपदेशं न जानन्ति न च ग्रन्थशतैरपि ॥

इति द्वितीयमुत्तरम् ॥ २ ॥

पुनः तदेवं मुख्यतयोच्यते—श्रुतिस्त्वस्मिन्नपि मते साधिकैवास्ति, परन्त्वेतन्मतस्य बोधो युष्माकं नास्ति । तेन यूयं शङ्कर-वैष्णवप्रवर्त्तितमार्गानुसारितत्त्वमालम्ब्य वदथ श्रुतिः साधिका नास्तीति । तत्सत्यम्, शङ्कररामानुजादिश्रुतयश्चात्र साधिका मा भवन्तु नाम, श्रुतयस्तु भविष्यन्त्येव साधिका इति ।

---

१. °अवारणीयं°–मु० पा० ।
२. °तोऽभ्येति–मु० पा० ।
३. च तथाप्यणीयं–मु० पा० ।
४. स्वरूपं त्वयि–मु० पा० ।
५. तत्–मु० पा० ।
६. गोपकक्षागतच्छागे–पू० सं० ।
७. वदन्तोप°–पू० सं० ।

अयम्भावः—वेदस्तु शाखाभेदैरनेकधा विस्तृतः। तत्र पञ्चाशदुपनिषदां निबन्धः कृत[1]स्ततोऽप्यधिका उपलभ्यन्ते। परन्तु न तेन निबन्धेन प्रायो निर्णयव्यवहारः। तत्रापि शङ्करेण दशैवाभिमता उपनिषद् ईश-केनेत्यादयः प्रसिद्धाः। रामानुजप्रभृतिभिस्तु दशस्वपि शङ्कराभिमतादन्योऽर्थ इति स्पष्टमुदीर्यते। एवमन्येऽपि स्वाभिप्रायानुसारि वेदस्य तात्पर्यं वर्णयिष्यन्ति। एतावता[2] तत्तात्पर्यं तेषामेव न तु वेदस्येति। यथा विरोचनः प्रजापतिनाऽनुशिष्टोऽपि स्वचित्तदोषेण देह आत्मत्वबुद्धिं दृढीकृत्यासुरान् सर्वाननुशशासेति छान्दोग्ये स्पष्टाख्यायिकाऽस्ति। यतो योगिनां स्थूलवेदे प्रयोजनमेव नास्ति। सर्ववेदमूलभूत ॐकार एव प्रयोजनं तात्पर्यञ्च। तत्र सर्ववेदानां[3] लयोदयौ भवतः, यतः ॐकारप्रतिपादिकाः सर्वाः श्रुतयोऽत्र साधिकाः। तथाहि—

"वेदस्य सारतरः प्रणवः भूरित्येव ऋग्वेदादजायत, भुव इति यजुर्वेदात्, स्वरिति सामवेदात्तानि शुक्राण्यभ्यतपत्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति। तानेकधा समभरत्तदेतदोमिति" बह्वृचब्राह्मणे। अस्य च प्रणवस्य ॐ इत्येतदक्षरमिदं सर्वमिति सर्वात्म्यश्रुतौ तन्मात्राणां चाकारोकारमकाराणां क्रमात् स्थूलकारणप्रपञ्चवाचकयोरभेदात् पूर्वस्योत्तरोत्तरत्र प्रविलापने गुरुयुक्त्या क्रियमाणे स्थूलस्य जगतो वेदस्य वा सूक्ष्मे लवणोदकन्यायेन प्रविलयो भवति। तथा सूक्ष्मस्य कारणे कारणस्य तुरीयेऽर्द्धमात्रावाच्ये मात्राख्ये "शिवमद्वैतं चतुर्थं मन्यन्ते" इति श्रुतेर्गलिताखिलद्वैतभावे वाङ्मनसातीते प्रविलयो भवति। अतः प्रणववेद इत्यभ्युपगम्य तद्द्वारा तत्प्रवर्तकनादब्रह्मेत्यवलम्ब्य नादब्रह्मणो यन्मूलं तत्तत्त्वमिति विश्रान्तिमतां मते का वा श्रुतिः साधिका न भवतीति प्रसिद्धतरमेव सर्वत्र।

प्रणवप्रशंसा च [4]शिखोपनिषदि—

"प्रणवः सर्वान्प्राणान् [5]प्रणामयति वै तस्मात्प्रणवश्चतुर्द्धा[6]ऽवस्थित इति वेददेवयोनिः सर्ववाच्यवस्तु प्रणवात्मकम्। देवाश्चेति सन्धत्तां[7] सर्वेभ्यो दुःसहेभ्यः[8] सन्वारयति। तारणात्तानि सर्वाणीति। [अथर्वशिखोप० १-२, ई० अ० पृ० १५८]

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च।
पञ्चधा पञ्चदैवत्यः प्रणवः परिपठ्यते॥

तत्राधिकं क्षणमेकमास्थाय क्रतुशतस्यापि फलमवाप्नोति। कृत्स्नमोङ्कारगतं च सर्वज्ञानेनेति। माण्डूक्योपनिषदि—

---

१. निबन्धाः कृताः—पू० सं०।
२. तावता—मु० पा०।
३. सर्वदेवानां—पू० सं०।
४. शिवोप°—पू० सं०।
५. परमात्मनि प्रणाययति—मु० पा०।
६. चतुर्धा°—मु० पा०
७ वेददेवयोनिर्ध्येयाश्चेति संधत्तां—पू० सं०।
८. दुःखभयेभ्यः—मु० पा०

ॐकाराच्छन्दसो[1] ज्ञात्वा न किञ्चिदपि चिन्तयेत् ।
युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ॥
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचिद् ।
प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः[2] स्मृतः ॥
अपूर्वोऽनन्तरोऽवाह्योऽनपरः प्रणवोऽव्ययः ।
सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ॥
एवं हि प्रणवं ज्ञात्वा फलते[3] तदनन्तरम् ।
प्रणवं हीश्वरं विद्यात्सर्वस्य हृदये स्थितम् ॥
सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ।
अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ॥
ॐ कारो विदितो येन समुनिर्नेतरो जनः ॥ इति ।
( मा० आगम० २४-२८ )

बृहदारण्यके—स यथार्द्रैधाग्नेरभ्याहितस्येत्यादि ।
( ४।५।११, ई० अ० पृ० १०८ )

छान्दोग्ये—एतदक्षरमुद्गीथेत्यादि । ( १।४।१, ई० अ० पृ० ३३ )

एतदेवाभिप्रेत्य महाभारते सनत्सुजातीयवचनम्—

यतो न वेदा मनसा सहैव मैनं[4] प्रविशन्ति ततोऽथ मौनम् ।
यत्रोत्थितो वेदशब्दस्तथायं स तन्मयत्वेन विभाति राजन् ॥
( स० २।२ )

भागवते चाप्येकादशस्कन्धे—

स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रास्वरो वर्ण इति स्थविष्ठः ॥
( भा० ११।१२।१७ )

शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ।
अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥
मयोपबृंहितं भूम्ना ब्रह्मणाऽनन्तशक्तिना ।
भूतेषु घोषरूपेण विसेषूर्णेव लक्ष्यते ॥
यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् ।
आकाशाद्घोषवान्प्राणो मनसा स्पर्शरूपिणा ॥

---

१. ओङ्कारं पादशो–मु० पा० ।
२. चापरः—पू० सं० ।
३. व्यश्नुते–मु० पा०
४. सहैनमनु–मु० पा० ।

छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ।
ॐ काराद्व्यञ्जितस्पर्शस्वरोष्मान्तस्थभूषिताम् ॥
( भा० ११।२१।३६-३९ )

इत्यादि, अन्यच्च—

वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् ।
उपासते तपोनिष्ठा हंसं मां मुक्तकिल्विषाः ॥
त्रेतायुगे महाभाग प्राणान्मे हृदयात्त्रयी ।
विद्या प्रादुरभूत्तस्या अहमासं त्रिवृन्मखः ॥
विप्रक्षत्रियविट्शूद्रा मुखबाहूरुपादजाः ॥ इत्यादि ।
( भा० ११।१७।११-१३ )

गीतायाञ्च—

ॐ इत्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ ( गी० ८।१३ )

एवमन्यत्रापि बहुधा प्रपञ्चितम्, तदत्र विस्तरभयान्न लिख्यते। इति तृतीयमुत्तरम् ।। ३ ।।

पुनः वेदार्थस्य बोधस्तु केषाञ्चिन्नास्त्येव । केवलमभिमानमेव पुरस्कृत्य ये वदन्ति तान् प्रति चतुर्थमिदमुत्तरम्—यद्भवद्भिर्वेदो वेद इति पुनः पुनरुच्यते । तस्य वेदस्य त्वभ्यासेऽप्यवधूतानां दोष एव स्यात् । कथमिति चेदुच्यते-वेदस्य पूर्वभागस्तु वर्णानामेव, वेदान्तभागस्तु भिक्षूणामेव, योगभागोऽस्त्यवधूतानाम् । वेदस्य पूर्वभागे ज्ञानं वाच्यार्थेन न दर्शितम् । किन्तु तात्पर्ये तदस्तीति भवद्भिरेवोच्यते । एवञ्च वेदस्य पूर्वभागे यथा ज्ञानं तात्पर्येऽस्ति तथा वेदान्तभागे योगस्तात्पर्यार्थोऽस्ति । यद्यपि बहुधा वाच्यार्थेनापि दर्शितो योगस्तथापि मुख्योत्तरं तु मुख्यतात्पर्य एवास्ति । यतो वेदान्ततात्पर्यं लक्ष्यं चावधूत एवास्ति । "सर्वे वेदास्तत्पदमामनन्ति" इत्यादि श्रुतयो "वेदैश्च सर्वैरहमेव वेद्यो" इत्यादि स्मृतयश्च ।

रूपे इमे सदसती तव वेद सृष्टेर्बीजाङ्कुराविव न चान्यदरूपकस्य ।
युक्ताः समक्षमुभयत्र विचिन्वते त्वां योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥

इत्यादिपुराणवाक्यानि चात्र साधकानि। एतदेवाभिप्रेत्य महाभारते सनत्सुजात आह—

न वेदानां वेदिता कश्चिदस्ति कश्चित्त्वेतान् बुध्यते वापि राजन् ।
यो वेद वेदान्न स वेद वेद्यं सत्ये स्थितो यस्तु स वेद वेद्यम् ॥
न वेदानां वेदिता कश्चिदस्ति वेद्येन वेदं न विदुर्न वेद्यम् ।
यो वेद वेदं सच वेद वेद्यं यो वेद वेद्यं न स वेद सत्यम् ॥
यो वेद वेदान् सच वेद वेद्यं न तं विदुर्वेदविदो न वेदाः[1] ।
तथापि वेदेन विदन्ति वेदं ये ब्राह्मणा वेदविदो वदन्ति ॥

१. विप्राः—पा० ।

धामांशभागस्य तथाहि वेदा यथा च शाखा हि महीरुहस्य ।
संवेदने चैव यथामनन्ति तस्मिन् हि सत्ये परमात्मनोऽर्थे ॥
( स० २।४१-४४ )

धृतराष्ट्र उवाच—

आख्यानपञ्चमैर्वेदैर्भूयिष्ठं कथ्यते जनः ।
तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथा परे ॥
द्विवेदाश्चैकवेदाश्च अनृचश्च तथा परे ।
तेषां तु कतरः स स्याद्यमहं वेद वै द्विजम् ॥
( स० २।३५-३६ )

सनत्सुजात उवाच—

एकस्य वेदस्याज्ञानाद्वेदास्ते बहवः कृताः ।
सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः ॥ ( २।३७ )
एवं वेदमविज्ञाय प्राज्ञोऽहमिति मन्यते ।
दानमध्ययनं यज्ञो लोभादेतत्प्रवर्तते ॥
सत्यात्प्रच्यवमानानां सङ्कल्पश्च तथा भवेत्[1] ।
ततो यज्ञः प्रतीयेत सत्यस्यैवावधारणात्[2] ॥ ( २।३८ )

धृतराष्ट्र उवाच—

ऋचो यजूंषि यो वेद[3] सामवेदं च वेद यः ।
पापानि कुर्वन् पापेन लिप्यते किं न लिप्यते ॥ [ स० २।३ ]

सनत्सुजात उवाच—

नैनं सामान्यृचो वापि न यजूंष्यविचक्षणम् ।
त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहम् ॥
न छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्त्तमानम् ।
नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले[4] ॥
( स० २।४५ )

एवञ्च स्थूलवेदतात्पर्यैर्युष्माभिः सूक्ष्मवेदतात्पर्याणामस्माकं मतमविज्ञाय योऽनुयोगस्तत्प्रतिवाक्यमिदं चतुर्थमुत्तरम् ॥ ४ ॥

योगबीजे—

बद्धा येन विमुच्यन्ते नाथमार्गमतः परम् ।
तमहं कथयिष्यामि तव प्रीत्या सुरेश्वरि ॥ ( यो० बी० ७ )
अनेकशतसङ्ख्याकैस्तर्कव्याकरणादिभिः ।
पतिताः शास्त्रजालेषु प्रज्ञया ते विमोहिताः ॥

१. संकल्पा वितथाभवन्–मु० पा० । २. कर्म प्रतायेत सत्यस्य नवधा–मु० पा० ।
३. यजूंष्यधीते यः–मु० पा० । ४. पादव्यत्यासः–मु० पु० ।

नानामार्गैस्तु दुष्प्राप्यं कैवल्यं परमं पदम् ।
सिद्धमार्गेण लभ्येत नान्यथा शिवभाषितम् ॥
अनिर्वाच्यपदं वक्तुं न शक्यं तैः सुरैरपि ।
स्वात्मप्रकाशरूपं तत् किं शास्त्रेण प्रकाश्यते ॥
(यो० बी० ७-१०)

विशुद्ध एव परमात्मा जीवाभिध इत्युक्त्वा जीवस्य दोषाः कामक्रोधभयचिन्तेत्यादयश्चोक्ताः ।

तस्माद्दोषविनाशार्थमुपायं कथयामि ते ।
ज्ञानं केचिद्वदन्त्यत्र केवलं तन्न सिद्धये ॥
योगहीनं कथं ज्ञानं मोक्षदं भवतीश्वरि ॥
(यो० बी० १८, १९)

अज्ञानात्संसारो ज्ञानेन मुच्यते । तत्र योगस्य किं कार्यमिति देव्या पृष्ट ईश्वर उवाच—(योगबीजे)

असौ दोषैर्विमुक्तः किं कामक्रोधभयादिभिः ।
सर्वदोषैर्वृतो जीवः कथं ज्ञानेन मुच्यते ॥ २२ ॥
ज्ञाननिष्ठो विरक्तो हि धर्मज्ञो विजितेन्द्रियः ।
विना योगेन देवोऽपि न मोक्षं लभते प्रिये ॥ ३३ ॥
अपक्काः परिपक्काश्च द्विविधा देहिनः स्मृताः ।
अपक्का योगहीनास्तु पक्का योगेन देहिनः ॥ ३४ ॥
तस्माज्ज्ञानं च वैराग्यं जपः स्यात्केवलं श्रमः ॥ ४१ ॥
शरीरेण जिताः सर्वे शरीरं योगिभिर्जितम् ॥
तत्कथं कुरुते तेषां सुखदुःखादिजं फलम् ॥ ४९ ॥
देवैरपि न लभ्येत योगदेहो महाबलः ॥
छेदबन्धैर्विमुक्तोऽसौ नाना शक्तिधरः परः ॥ ५१ ॥
यथाऽऽकाशस्तथा देह आकाशादपि निर्मलः ॥
सूक्ष्मात्सूक्ष्मतरो देहः स्थूलात्स्थूलो जडाज्जडः ॥ ५३ ॥
इच्छारूपो हि योगीन्द्रः स्वतन्त्रस्त्वजरामरः ॥
क्रीडति त्रिषु लोकेषु लीलया यत्र कुत्रचित् ॥ ५४ ॥
अचिन्त्यशक्तिमान् योगी नानारूपाणि धारयन् ॥
संहरेच्च पुनस्तानि स्वेच्छया विजितेन्द्रियः ॥ ५५ ॥
पुरैव मृत एवासौ मृतस्य मरणं कुतः ।
मरणं यत्र सर्वेषां तत्रासौ सखि जीवति ॥ ५७ ॥
कर्त्तव्यं नैव तस्यास्ति कृतेनासौ न लिप्यते ।
जीवन्मुक्तः सदा स्वस्थः सर्वदोषविवर्जितः ।

विरक्ता ज्ञानिनश्चान्ते देहेन विजिताः सदा ॥
ते कथं योगिभिस्तुल्या मांसपिण्डाः कुदेहिनः ॥ ६० ॥

देव्युवाच—

ज्ञानिनस्तु मृता ये वै तेषां भवति कीदृशी ।
गतिः कथय देवेश कारुण्यामृतवारिधे ॥ ६१ ॥

ईश्वर उवाच—

देहान्ते ज्ञानिनः पुण्यात्पापान्न फलमाप्यते ।
यादृशं तु भवेत्तत्र मुक्तो ज्ञानी पुनर्भवेत् ॥ ६२ ॥
पुण्यात्पुण्येन लभते सिद्धेन सह सङ्गतिम् ।
ततः सिद्धस्य कृपया योगी भवति नान्यथा ॥ ६३ ॥
ततो नश्यति संसारो नान्यथा शिवभाषितम् ॥ ६४ ॥
महाविष्णुमहेशानां प्रलयेष्वपि योगिनाम् ॥
नास्ति पातो लयस्थानां महातत्त्वे विवर्त्तिनाम् ॥ ६५ ॥

वेदान्ततर्कोक्तिभिरागमैश्च नानाविधैः शास्त्रकदम्बकैश्च ॥
ध्यानादिभिः सत्करणैर्न गम्यं चिन्तामणिं त्वेकगुरुं विहाय ॥ ६ ॥ (योगबीजे)

सिद्धसिद्धान्तपद्धतौ—शिवाद् भैरवः, भैरवाच्छ्रीकण्ठः, श्रीकण्ठात् सदाशिवः, सदाशिवादीश्वरः, ईश्वराद्रुद्रः, रुद्राद्विष्णुः, विष्णोर्ब्रह्मा, इति । महासाकारपिण्डस्य[1] मूर्त्त्यष्टकम् । ( सि० १।३७ )

आचारे ब्राह्मणा वसन्ति, शौर्ये क्षत्रियाः, व्यवसाये वैश्याः, सेवाभावे शूद्राः । अनन्तसिद्धा मतिप्रकाशे । अस्ति कश्चित्परमाद्वैतस्य भावः । स एवात्मेति ।

शिवस्याभ्यन्तरे शक्तिः शक्तेरभ्यन्तरे शिवः ।
अन्तरं नैव जानीयाच्चन्द्रचन्द्रिकयोरिव ॥ ( सि० ४।२६ )
तज्ज्ञेयं सद्गुरोर्वक्त्रान्नान्यथा शास्त्रकोटिभिः ।
न तर्कशब्दविज्ञानात् नाचाराद्वेदपावनात्[2] ॥
वेदान्तश्रवणान्नैव तत्त्वमस्यादिबोधनात् ।
देवार्चनाश्रयाद् भक्त्या नाश्रमाणां च पालनात्[3] ॥
स्वस्थो[4] योगी स्वयं कर्ता लीलया चाजरामरः ।
अवध्यो देवदैत्यानां क्रीडते भैरवो यथा ॥
( सि० ५।३१-३४ )

न गुरोरधिकं न गुरोरधिकं शिवशासनतः शिवशासनतः ॥ ( सि० ५।६६ )

१. °साकारस्य—पू० सं० ।
२. °पारगात्—मु० पा० ।
३. "न हंसोच्चारणाज्जीवब्रह्मणोरैक्यभावनात्" इति मु० पा० ।
४. स्वेच्छो—मु० पा० ।

करुणाखड्गपातेन छित्वा पाशाष्टकं शिशोः ।
सम्यगानन्दजनकः सद्गुरुः सोऽभिधीयते ॥ ( सि० ५।६८ )

पुनर्योगादिना शास्त्रद्रष्टाऽनुमानात्तर्कमुद्रया भ्रामको गुरुस्त्याज्यः ।

स्वविश्रान्तिं न जानाति परेषां स करोति किम् ।
शिलया किं परं पारं शिलाजालं प्रतार्य्यते ॥
स्वयं तीर्णो भवेद्योऽसौ परान्निस्तारयत्यलम् । ( सि० ५।७३-७४ )

सर्वदर्शनानां स्वरूपदर्शनेन समन्वयं करोति–सोऽवधूतः स योगी स्यात् ।

अत्याश्रमी च योगी च ज्ञानी सिद्धश्च सुव्रतः ।
ईश्वरश्च तथा स्वामी धन्यः श्रीसाधुरेव च ॥
जितेन्द्रियश्च भगवान् स सुधीः कोविदो बुधः ।
सर्वेषां दर्शनानां च स्वरूपं स प्रकाशयेत् ॥
( सि० ६।२०-२२ )

सर्वतो भरिताकारं निबद्धं येन[1] बृंहितम् ।
चरते ब्रह्म तद्यस्तु ब्रह्मचारी स कथ्यते ॥
गृहिणीपूर्णता नित्यं गेहं व्योम सदाऽचलम् ।
यस्तया निवसत्यत्र गृहस्थः सोऽभिधीयते ॥
सदाऽन्तःप्रस्थितो योऽसौ स्वप्रकाशमये वने ।
वानप्रस्थः स विज्ञेयो न वने मृगवच्चरन् ॥
परमात्मा च जीवात्मा चात्मन्येव स्फुरत्यलम् ।
तस्मिन्न्यस्तः सदा येन संन्यासी सोऽभिधीयते ॥
( सि० ६।३३-३७ )

न वन्दनीयास्तत्काष्ठा[2] दर्शनभ्रान्तिकारकाः ।
वर्जयेत्तान् गुरून् दूराद्धीरः सिद्धमताश्रयः ॥
( सि० ६।७२ )

पद्मपुराणे कपिलगीतायाम्—

दत्तात्रेयादि सिद्धानां नवनाथास्तथैव च ।
शङ्करं गुरुरूपेण बोधितश्चात्मतत्त्वभिः (?) ॥
ऋग्वेदोऽथ यजुर्वेदो सामवेदो ह्यथर्वणः ।
सूक्ष्मवेदो हि अध्यक्षः पञ्च वेदाः प्रकीर्तिताः ॥

ईश्वर उवाच—

ॐकारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः ।
तस्मिन्मध्ये स्थितं तत्त्वं प्रदर्शयति सद्गुरुः ॥

---

१. निजबोधेन–मु० पा० । २. °स्ते काष्ठा–मु० पा० ।

ॐ मित्येवं परं ब्रह्म सर्वतत्त्वानुदर्शनम् ।
आब्रह्मस्तम्बपर्यन्तं सर्वानुग्रहकारकम् ॥
तारकं च भवेद् ब्रह्मा दण्डकं विष्णुरुच्यते ।
कुण्डल्यां हि तथा रुद्रो अर्द्धचन्द्रः स ईश्वरः ॥
बिन्दुः सदाशिवः साक्षात्प्रणवे पञ्चदेवताः ।
निरञ्जनस्तदतीत उत्पत्तिस्थितिकारणम् ॥
दुर्लभो विषयत्यागी दुर्लभं तत्त्वदर्शनम् ।
दुर्लभा सहजावस्था सद्गुरोः करुणां विना ॥
विचारदर्पणं[1] यस्य अवलोकनमीक्षितम् ।
दृश्यते तत्स्वरूपं च तत्रैकं पृच्छ किं नहि ॥
हृदयं दर्पणं यस्य मनस्तत्र विलोकयेत् ।
दृश्यते प्रतिबिम्बेन आत्मरूपं सुनिश्चितम् ॥

अवधूतगीतायाम्—

आब्रह्मस्तम्बपर्यन्तं सम्पूर्ण[2]परमात्मनि ।
भिन्नाभिन्नं न पश्यामि तस्याऽहं पञ्चमाश्रमः ॥
आशापाशविनिर्मुक्तमादिमध्यान्तनिर्मलम् ।
अनन्तानन्दब्रह्मज्ञः[3] अकारं तस्य लक्षणम् ॥ ( ८।६ )
वासना वर्जिता येन वक्तव्यं च निरामयम् ।
वर्तमानेषु वर्त्तेत वकारं तस्य लक्षणम् ॥
धूलिधूसरगात्राणि धूतचित्तनिरामयम् ।
ध्यानधारणनिर्मुक्तं धूकारं तस्य लक्षणम् ॥ ( ८।७ )
तत्त्वचिन्ता येन धूता चिन्ता चेष्टाविवर्ज्जिता ।
तमहंकारनिर्मुक्तं तकारं तस्य लक्षणम् ॥ ( ८।६-९ )

शिवं न जानामि कथं वदामि शिवं च जानामि कथं वदामि ।
अहं शिवश्चेत् परमार्थरूपं स्वच्छस्वभावं[4] गगनोपमं च ॥ ( १।२७ )
वेदा न लोका न सुरा न यज्ञा वर्णाश्रमौ नैव कुलं न जातिः ।
न धूममार्गो न च दीप्तिमार्गो ब्रह्मैव रूपं परमार्थतत्त्वम् ॥ ( १।३४ )

व्याप्यव्यापकनिर्मुक्तं त्वमेकः सकलं यदि ।
प्रत्यक्षं चापरोक्षं च आत्मानं मन्यसे कथम् ॥ ( १।३५ )

---

१. विचारो–पू० सं० । २. सम्पूर्ण–पू० सं० ।
३. आनन्दे वर्त्तते नित्यं–मु० पा० । ४. परमार्थतत्त्वं च समस्वरूपं–मु.पा. ।

आदिमध्यान्तमुक्तोऽहं न बद्धोऽहं कदाचन।
स्वभावनिर्मलः शुद्ध इति मे निश्चला मतिः ॥ ( १।४४ )
न बद्धो नैव मुक्तोऽहं न चाहं ब्रह्मणः पथक्।
न कर्त्ता नैव भोक्ताऽहं व्याप्यव्यापकवर्जितः ॥ ( १।५० )
न जातोऽहं मृतो वापि न मे कर्म शुभाशुभम्।
शुद्धोऽहं निर्गुणं ब्रह्म बन्धमुक्ती[1] कथं मम ॥ ( १।५९ )
यदि सर्वगतो देवः स्थिरः पूर्ण इति स्मृतः[2]।
अन्तरं न हि पश्यामि सबाह्याभ्यतरः कथम् ॥ ( १।६० )
भावगम्यं निराकारं साकारं दृष्टिगोचरम्।
भावाभावविनिर्मुक्तमन्तरालं तदुच्यते ॥ ( २।१८ )
साकारं च निराकारं नेति नेतीति सर्वथा।
भेदाभेदविनिर्मुक्तं वर्त्तते केवलं शिवः ॥
दिवानक्तं न ते चित्त उदयास्तमयौ नहि।
विदेहस्य शरीरित्वं कल्पयन्ति कथं बुधाः ॥
न ते च माता न पिता न बन्धु र्न ते च पत्नी न सुहृन्न पुत्रः।
न पक्षपातो न विपक्षपातः कथं हि सत्ताऽसि रजो हि चेतः ॥
धर्मार्थकाममोक्षं च द्विपदादि चराचरम्।
मन्यते योगिनः सर्वं मरीचिजलसन्निभम् ॥
विन्दति विन्दति नहि नहि मन्त्रश्छन्दो लक्षणमिह नहि तन्त्रः।
समरसमग्नो भावितपूतः प्रलपितमेतत्कथमवधूतः[3] ॥ ( ५।३२ )
अद्वैतरूपमखिलं हि कथं वदामि नित्यं ह्यसत्यमखिलं हि कथं वदामि।
सत्यं ह्यसत्यमखिलं हि कथं वदामि ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ( ३।५ )
ब्रह्मादयः सुरगणाः कथमत्र सन्ति स्वर्गादयो वसतयः कथमत्र सन्ति।
यद्येकरूपममलं परमार्थतत्त्वं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ( ३।२४ )
मायाप्रपञ्चरचना न च मे विकारः कौटिल्यदम्भरचना न च मे विकारः।
सत्यानृतेतिरचना न च मे विकारो ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ( ३।२७ )
न शून्यरूपं न विशून्यरूपं न शुद्धरूपं न विशुद्धरूपम्।
रूपं विरूपं न भवामि किञ्चित् स्वरूपरूपं परमार्थसत्त्वम् ॥ ( ३।४५ )
नावाहनं नैव विसर्जनं च पत्राणि पुष्पाणि कथं भवन्ति।
ध्यानानि मन्त्राश्च कथं भवन्ति समासमं सर्व[4]शिवार्चनं च ॥ ( ४।१ )

---

१. बन्धमुक्तौ—प० सं०। २. पूर्णो निरन्तरः—मु० पा०।
३. प्रलयति तत्त्वं परमवधूतः—मु० पा०। ४. चैव—मु० पा०।

मूर्खोऽपि नाहं न च पण्डितोऽहं मौनं च वार्ता[१] न च मे कदाचित् ।
तर्कं वितर्कं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ ( ४।२० )
अस्तङ्गतो नैव सदोदितोऽहं तमश्च तेजो न च मे विभाति ।
सन्ध्यादिकं कर्म कथं करोमि[२] स्वरूपनिर्वाणमनामयोऽहम् ॥ ( ४।२२ )
इह तत्त्वमसिप्रभृतिश्रुतिभिः प्रतिपादितमात्मनि तत्त्वमसि ।
त्वमुपाधिविवर्जितसर्वसमं किमु रोदिषि मानस[३] सर्वसमम् ॥ ( ५।२ )
नहि कल्पितभागविभाग इति नहि रागविराग[४]विचार इति ।
पदसन्धिविवर्जितसर्वसमं किमु रोदिषि मानस[३] सर्वसमम् ॥ ( ५।४ )
अविवेकविवेकमबोध इति अविकल्पविकल्पविबोध इति ।
यदि चैकनिरन्तरबोध इति किमु रोदिषि मानस[३] सर्वसमम् ॥ ( ५।१० )
बहुधा श्रुतयः प्रविदन्ति यतो वियदादिरिदं मृगतोयसमम् ।
यदि चैकनिरन्तरसर्वसमं किमु रोदिषि मानव[३] सर्वसमम् ॥ ( ५।३१ )
[५]सविभक्तिविभक्तिविहीनपरमणुकायविकाय[६]विहीनपरम् ।
यदि चैकनिरन्तरसर्वशिवं[७] यजनं च कथं स्तवनं[८] च कथम् ॥ ( ६।२ )
दिनरात्रिविभेदनिराकरणमुदितानुदितस्य निराकरणम् ।
यदि चैकनिरन्तरसर्वशिवं रविचन्द्रमसौ [९]ज्वलनश्च कथम् ॥ ( ६।४ )
न च आश्रमवर्णविहीनपरो न तु कारणकर्तृविहीनपरः ।
यदि चैकनिरन्तरसर्वशिवं गुणदोषविचारवचांसि कथम् ॥

हठप्रदीपिकायाम्—

क्रियायुक्तस्य सिद्धिः स्यादक्रियस्य कथं भवेत् ।
न शास्त्रपाठमात्रेण योगसिद्धिः प्रजायते ॥
वर्जयेद्दुर्जनप्रीतिं वह्निस्त्रीपथिसेवनम् ।
प्रातः स्नानोपचारादि कायक्लेशादिकं तथा ॥
चले वाते चलं चित्तं निश्चले निश्चलं तथा ।
योगी स्थाणुत्वमाप्नोति ततो वायुं निरोधयेत् ॥
ब्रह्मादयोऽपि त्रिदशा पवनाभ्यासतत्पराः ।
तेन सिद्धिं गतास्ते च तस्मात्पवनमभ्यसेत् ॥

---

१. विमौनं–मु० पा० ।
२. वदामि–मु० पा० ।
३. मानव सर्वसमः–मूलमातृकायाम् ।
४. कारणकार्य०–मु० पा० ।
५. अवि०–मु० पा० ।
६. ननु कार्य विकार्य०–मु०पा० ।
७. शिवः–पू० सं० ।
८. तपनं–मु० पा० ।
९. चन्द्रमसोर्ज्वलनं–पू० सं० ।

यावद्देहे[1] मरुद्बद्धस्तावच्चित्तं निरामयम् ।
यावद्दृष्टिर्भ्रुवोर्मध्ये तावत्कालभयं कुतः ॥
कालं पराङ्मुखीकृत्य त्रिपथे परिवर्तयेत् ।
का भवेत्खेचरी मुद्रा व्योमचक्रं तदुच्यते ॥
एकं सृष्टिमयं बीजमेका मुद्रा च खेचरी ।
एको देवो निरालम्बश्चैकावस्था मनोन्मनी ॥
सुचिरं ज्ञानजनकं पञ्चस्रोतःसमन्वितम् ।
तिष्ठती खेचरी मुद्रा तस्मिन् शून्ये निरञ्जने ॥ ( ३।९५ )

अयं योगः पुण्यवतां धन्यानां तत्त्वशालिनाम् ।
निर्मत्सराणां सिध्येत न तु मत्सरशालिनाम् ॥
राजयोगस्य माहात्म्यं को वा जानाति तत्त्ववित् ।
ज्ञानं मुक्तिः स्थितिः सिद्धिर्गुरुवाक्येन लभ्यते ॥ ( ४।८ )

अन्तर्लक्ष्यविलीनचित्तपवनो योगी यदा वर्तते
दृष्ट्या निश्चलतारया बहिरसौ पश्यन्न पश्यत्यपि ।
मुद्रेयं खलु शाम्भवी भवति सा युष्मत्प्रसादाद् गुरो ।
शून्याशून्यविवर्जितं स्फुरति यत्तत्त्वं पदं शाम्भवम् ॥ ( ४।३७ )
अर्द्धोद्घाटितलोचनः स्थिरमना नासाग्रदत्तेक्षणः ।
चन्द्रार्कावपि लीनतामुपनयान्निष्पन्दभावान्तरे[2] ॥
ज्योतीरूपमशेषबाह्यरहितं[3] देदीप्यमानं परम् ।
तत्त्वं तत्पदमेति वस्तु परमं वाच्यं किमत्राधिकम् ॥ ( ४।४१ )

चित्तं चरति खे यस्माज्जिह्वा चरति खे गता ।
तेनैव खेचरी नाम मुद्रा सिद्धैर्नमस्कृता ॥
सूर्याचन्द्रमसोर्मध्ये निरालम्बेऽनिले पुनः ।
संस्थिता व्योमचक्रे या सा मुद्रा नाम खेचरी ॥
निरालम्बं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ।
स बाह्याभ्यन्तरे व्योम्नि घटवत्तिष्ठति ध्रुवम् ॥

अथारम्भावस्था—

ब्रह्मग्रन्थिर्भवेद्भिन्ना ह्यानन्दः शून्यसम्भवः ।
विचित्रः क्वणिको[4] देहेऽनाहतः श्रूयते ध्वनिः ॥ ( ४।७० )

---

१. देहो–पा० ।
२. भावेन यः–मु० पा० ।
३. बीजमखिलं–मु० पा० ।
४. क्वणजो–मु० पा० ।

दिव्यगन्धो दिव्यचक्षुस्तेजस्वी[१] स्यादरोगवान् ।
सम्पूर्णहृदये शून्ये[२] आरम्भो योगवान् भवेत् ॥ ( ७१।१ )

अथ घटावस्था—

द्वितीयायां घटीकृत्य वायुर्भवति मध्यमः[३] ।
दृढासनो भवेद्योगी ज्ञानी देवसमस्तथा ॥ ७२
विष्णुग्रन्थिर्यदा भिन्नः परमानन्दसूचकः ।
अतिशून्यविभेदश्च[४] भेरीशब्दस्तथा भवेत् ॥ ७३ ॥

अथ परिचयावस्था—

तृतीयायां ततो भित्त्वा विमायो[५] मर्द्दलध्वनिः ।
महाशून्यं तथा[६] याति सर्वसिद्धिसमाश्रयम् ॥ ७४ ॥
चित्तानन्दं ततो जित्वा सहजानन्दसम्भवः ।
दोषदुःखक्षुधानिद्राजरामृत्युविवर्जितः[७] ॥ ७५ ॥

अथ निष्ठावस्था—

रुद्रग्रन्थिं ततो भित्वा सर्वपीठगतो[८]ऽनिलः ।
निष्पन्नो वैष्णवः शब्दः क्वणद्वीणाक्वणो भवेत् ॥ ७६ ॥
अस्तु वा माऽस्तु वा मुक्तिरत्रैवाऽखण्डितं महत् ।
लयामृतमिदं सौख्यं राजयोगादवाप्यते ॥ ७८ ॥
राजयोगपदं प्राप्तं सुखोपायं[९] सुचेतसाम् ।
सद्यः प्रत्ययसंधायी जायते नादजो लयः ॥ ८० ॥
नादानुसन्धानसमाधिभाजां योगीश्वराणां हृदये प्ररूढम् ।
आनन्दमेकं वचसामवाच्यं जानाति तं श्रीगुरुनाथ एव ॥
नादकोटिसहस्राणि बिन्दुकोटिशतानि च ।
सर्वे तत्र लयं यान्ति यत्र देवो निरञ्जनः ॥
योगिनां ज्ञानविदुषामन्येषां च महात्मनाम् ।
प्राप्तं तं कालपुरुषं सुविज्ञाप्यं विचक्षणैः ॥
यावन्नैव प्रविशति मरुद्विज्वरो मध्यमार्गे
यावद्बिन्दुर्न भवति दृढः प्राणवस्तुप्रबद्धः ।

---

१. दिव्यदेहश्च तेजस्वी दिव्यगन्धः–मु० पा० ।
२. हृदयः शून्य–मु० पा० ।
३. मध्यगः–मु० पा० ।
४. अतिशून्ये विमर्दश्च–मु० पा०,
५. तु विज्ञेयो विहायो–मु० पा० ।
६. तदा–मु० पा० ।
७. दोषदुःखजराव्याधिक्षुधानिद्रा–मु० पा० ।
८. शर्वपीठ°–मु० पा० ।
९. °पायोल्प–मु० पा० ।

यावद्व्योम्नः सहजसदृशं जायते नैव तत्त्वम्
तावत्सर्वं वदति यदिदं दम्भमिथ्याप्रलापः ॥

हठप्रदीपिकायां दशमोपदेशे[1]—

आदिनाथोदितं सर्वमष्टैश्वर्यप्रदायकम् ।
वल्लभं सर्वसिद्धानां दुर्लभं महतामपि ॥
पीड्यते न तु रोगेण न च लिप्येत कर्म्मणा ।
बाध्यते न च कालेन यो मुद्रां वेत्ति खेचरीम् ॥

ऊर्ध्वं षोडशपत्रपद्मगलितं प्राणादवाप्तं हठा—
दूर्ध्वास्यो रसनां नियम्य विवरे शक्तिं परां चिन्तयेत् ।
उत्कल्लोलकलाजलं च विमलं धारामृतं यः पिबेत्
निर्दोषः स मृणालकोमलवपुर्योगी परं जीवति ॥
यत्पाताले विशति सुषिरं मेरुमूले तदस्ति
तस्मिंस्तत्त्वं प्रविशति सुधीस्तन्मुखं निम्नगानाम् ।
चन्द्रात्सारः स्रवति वपुषस्तेन मृत्युर्नराणां
तं बध्नीयात् सुकरणमथो नान्यथा कायसिद्धिः ॥
बद्धं मूलबिलं येन तेन विघ्नो विदारितः ।
अजरामरतां याति यथा पञ्चमुखो हरः ॥
तत्रास्ति कारणं दिव्यं सूर्यस्य मुखबन्धनम् ।
गुरूपदेशतो ज्ञेयं न तु शास्त्रार्थकोटिभिः ॥
येन सञ्चालिता शक्तिः स योगी सिद्धिभाजनम् ।
किमत्र बहुनोक्तेन कालं जयति लीलया ॥
ज्ञानं कुतो मनसि जीवति देवि यावत्,
प्राणेऽपि जीवति मनो नृपते न तावत् ।
प्राणो मनोद्वयमिदं विलयं प्रयाति,
मोक्षं स गच्छति नरो न कथञ्चिदन्यः ॥
इन्द्रियाणां मनो नाथो मनोनाथश्च मारुतः ।
मारुतस्य लयो नाथः स लयो नादमाश्रितः ॥
अन्तर्लक्ष्यं बहिर्दृष्टिर्निमेषोन्मेषवर्जितः ।
एषा सा शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता ॥
शक्तिमध्ये मनः कृत्वा शक्तिं मनसि मध्यतः ।
मनसा मन आलोक्य धारयेत्परमं पदम् ॥
अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाम्बरे ।
अन्तःपूर्णो बहिःपूर्णः पूर्ण कुम्भ इवाम्भसि ॥

---

१. हठप्रदीपिकायाश्चत्वार एवोपदेशा उपलभ्यन्ते ।

सङ्कल्पमात्रकलनैव जगत्समग्रं सङ्कल्पमात्रकलना हि मनोविलासः।
[1]सङ्कल्पमात्रकलनैव कृतिस्तु नित्या सङ्कल्पनिश्चयमवाप्नुहि चात्मशान्तिम्[2]॥ (४।५८)

ज्ञेयं सर्वमतीतं च ज्ञानं च मन उच्यते।
ज्ञानं ज्ञेयं मनश्चैव[3] नान्यः पन्था द्वितीयकः॥ (४।६०)

श्री आदिनाथेन सपादकोटिर्लयप्रकाराः कथिता जयन्ति[4]।
नादानुसन्धायकमेव नान्यं मन्यामहे धन्यतमं लयानाम्॥ (४।६६)

मनःस्थैर्ये स्थिरो वायुस्ततो बिन्दुः स्थिरो भवेत्।
बिन्दुस्थैर्योदयात्सत्यं पिण्डस्थैर्यं प्रजायते॥
न्यासतः सुप्रसन्नात्मा निर्द्वन्द्वो विजितेन्द्रियः।
कुरुते युक्तकर्माणि नित्यनैमित्तिकानि च॥
योगेन पद्मात्मानं गुहायां प्राप्यते च सा।
तारकं जपते नित्यं जितासुः कामवर्ज्जितः॥
युक्तासने समारुह्य समकायशिरोधरः।
नासाग्रदृष्टिरेकाकी जपेदोङ्कारमक्षरम्॥
भूर्भुवःस्वरिमे लोकाश्चन्द्रसूर्याग्निदेवताः।
यस्य मात्रासु तिष्ठन्ति तत्परज्ज्योतिरोमिति॥
अकारश्च उकारश्च मकारो बिन्दुसंज्ञकः।
त्रिधा मात्रा स्थिता यत्र तत्परज्योतिरोमिति॥
त्रयः कालास्त्रयो वेदास्त्रयो देवास्त्रयोऽग्नयः।
त्रयो लोकाः स्थिता यत्र तत्परं ज्योतिरोमिति॥
इच्छा क्रिया तथा ज्ञानं ब्राह्मी रौद्री च वैष्णवी।
त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति॥
वचसा च जपेद्विद्वांश्चक्षुषा च समभ्यसेत्।
मनसा संस्मरेन्नित्यं तत्परं ज्योतिरोमिति॥
शुचिर्वाप्यशुचिर्वापि यो जयेत्प्रभवं सदा।
न स लिप्यति योगेन पद्मपत्रमिवाम्भसा॥
शरीरं नो त्यजेदेव कालः कस्यापि कुत्रचित्।
अन्तःशरीररक्षार्थं यत्नः कार्यस्तु योगिना॥
ततो लक्ष्यमनोऽभ्यासमहंभावविवर्ज्जितम्।
सर्वाङ्गकल्पनाहीनं कथं कालो जयेत तम्॥

---

१. सङ्कल्पमात्रमतिमुत्सृज निर्विकल्पमाश्रित्य–मु०पा०। २. °शान्तिः–पू० सं०।
३. समं नष्टं–मु० पा०। ४. न सन्ति–पू० सं०।

स एव काले स शिवः स सर्वो नापि किञ्चन ।
कः केन हन्यते तत्र म्रियते वापि कश्चन ॥
ततो व्यतीते समये कालस्य भ्रान्तिरूपितम् ।
योगी सुप्तोत्थित इव बोधं याति निबोधतः ॥

एवं सिद्धो भवेद्योगी वञ्चयित्वा विधानतः ।
कालं कलितसंसारं पौरुषेणाद्भुतेन च ॥
तत्रापि भवने योगी विहरत्येक एव सः ।
पश्यन्संसारवैचित्र्यं स्वेच्छया निरहङ्कृतिः ॥

द्वाराणां नवकं निरुद्ध्य मरुतं पीत्वा दृढं धारितम्
नीत्वाऽऽकाशमपानवह्निसहितं शक्त्या समुच्चालितम् ।
आत्मध्यानयुतस्त्वनेन विधिना विन्यस्य मूर्ध्नि ध्रुवम्[१]
यावत्तिष्ठति तावदेव मरुतां सङ्घेन संस्तूयते[२] ॥

( वि० मा० ६।१०० )

दृष्टिः स्थिरा यस्य विनापि दृश्यं वायुः स्थिरो यस्य विना प्रयत्नम् ।
चित्तं स्थिरं यस्य विनावलम्बं स एव योगी स गुरुः स सेव्यः ॥

गोरक्षोपनिषदि—

आदौ देवो महानन्दान्निर्ममे देवता स्वयम् ।
तस्मादिच्छा सुसम्पन्ना इच्छा ज्ञानं ततः क्रिया ॥
ततो व्यधां वरारोहे पिण्डब्रह्माण्डबुद्बुदम् ।
अव्यक्ताव्यक्तभावेन विचरामि जगत्त्रये ॥

एवं श्रीगुरुः आदिनाथः, मत्स्येन्द्रनाथः, तत्पुत्र उदयनाथः, दण्डनाथः, सत्यनाथः, सन्तोषनाथः, कूर्मनाथः, भवनार्जिः, तस्य श्रीगोरक्षनाथः, ईश्वरसन्तान आदिर्ब्राह्मणः सूक्ष्मवेदी, अद्वैतोपरि सदानन्द देवता, अनाहतशृङ्गी, खेचरीमुद्रा ।

विवेकमार्तण्डे—

अन्तर्निश्चलितात्मदीपकलिकास्वाधारबन्धादिभि-[३]
र्यो योगी युगकल्पकालकलनातत्त्वं च यो गीयते ।
ज्ञानामोदमहोदधिः समभवद्यत्रादिनाथः स्वयं
व्यक्ताव्यक्तगुणाधिकं तमनिशं श्रीमीननाथं भजे ॥

---

१. प्रणामविधिनावष्टभ्य मूर्ध्ना ध्रुवं—मु० पा० ।
२. तावदायनगत श्रेयः फलं विन्दति—मु० पा० ।
३. बेधादिभिः—पू० सं० ।

अजपानाम गायत्री योगिनां मोक्षदायिनी ।
अस्याः सङ्कल्पमात्रेण सर्वपापैः प्रमुच्यते ॥
अनया सदृशी विद्या अनया सदृशो जपः ।
अनया सदृशं ज्ञानं न भूतो न भविष्यति ॥ ( ६।३५-३७ )
अनया सदृशं तीर्थमनया सदृशः क्रतुः ।
अनया सदृशं पुण्यं न भूतं न भविष्यति ॥
अनया सदृशं स्वर्ग्यमनया सदृशं तपः ।
अनया सदृशं वेद्यं न भूतं न भविष्यति ॥
एतत्कालभयाद् ब्रह्मा प्राणायामपरायणः ।
योगिनो मुनयः सर्वे ततो वायुं नियन्त्रयेत् ॥
यत्सर्वं द्वन्द्वयोरैक्यं जीवात्मपरमात्मनोः ।
समस्तनष्टसङ्कल्पः समाधिः सोऽभिधीयते ॥
अवेद्यः सर्वशास्त्राणामभेद्यः सर्वदेहिनाम् ।
अग्राह्यो मन्त्रयन्त्राणां योगी युक्तः समाधिना ॥
हेतुदृष्टान्तनिर्मुक्तं मनोबुद्ध्याद्यगोचरम् ।
व्योमविज्ञानमानन्दं तत्त्वं तत्त्वविदो विदुः ॥
यथा घृते घृतं क्षिप्तं घृतमेव हि जायते ।
क्षीरे क्षीरं तथा योगी तत्त्वमेव हि जायते ॥
यावद्बिन्दुः स्थितो देहे तावन्मृत्युभयं कुतः ।
यावद्बद्धा नभोमुद्रा तावद्बिन्दुर्न गच्छति ॥ ( ६।६१ )
बिन्दुः शिवो रजः शक्तिर्बिन्दुरिन्दू रजो रविः ।
उभयोः सङ्गमादेव प्राप्यते परमं पदम् ॥ ( ६।६५ )

या पृथ्वी हरितालहेमरुचिरा तत्त्वं लकारान्वितम्
संयुक्ता कमलासनेन हि चतुष्कोणा हृदि स्थायिनी ।
प्राणं तत्र विलीय पञ्चघटिकं चित्तान्वितं धारयेत्
एषा स्तम्भकरी सदा क्षितिजयं कुर्याद् भुवो धारणा ॥ ( वि० ६।१४६ )

अर्द्धेन्दुप्रतिमं च कुन्दधवलं कण्ठेऽम्बुतत्त्वं स्थितम्
यत्पीयूषवकारबीजसहितं युक्तं सदा विष्णुना ।
प्राणं तत्र विलीय पञ्चघटिकं चित्तान्वितं धारयेत्
एषा दुःसहकालकूटजरणा स्याद्वारुणी धारणा ॥ १४७ ॥

यत्तालुस्थित इन्द्रगोपसदृशं तत्त्वं त्रिकोणं ज्वलत्-
तेजो रेफयुतं प्रवालरुचिरं रुद्रेण यत्सङ्गतम् ।

प्राणं तत्र विलीय पञ्चघटिकं चित्तान्वितं धारयेत्
एषा वह्निजयं सदा विदधती वैश्वानरी धारणा ॥ १४८ ॥

यद्भिन्नाञ्जनसन्निभं ··· ··· मिदं वृत्तं भ्रुवोरन्तरे
तत्त्वं वायुमयं यकारसहितं तत्रेश्वरो देवता ।
प्राणं तत्र विलीय पञ्चघटिकं चित्तान्वितं धारयेत्
एषा खे गमनं करोति यमिनां स्याद्वायवी धारणा ॥ १४९ ॥

आकाशं सुविशुद्धवारिसदृशं यद्ब्रह्मरन्ध्रे स्थितम्
यन्नाथेन सदाशिवेन सहितं शान्तं हकाराक्षरम् ।
प्राणं तत्र विलीय पञ्चघटिकं चित्तान्वितं धारयेत्
एषा मोक्षकपाटपाटनपटुः प्रोक्ता नभोधारणा ॥ १५० ॥

स्नातं तेन सहस्रतीर्थसलिले दत्तं द्विजेभ्यो धनम्
यज्ञानां च हुतं सहस्रमयुतं देवाश्च सम्पूजिताः ।
सत्यं तेन सुतर्पिताश्च पितरः स्वर्गं च नीता पुनर्-
यस्य ब्रह्मविचारणे क्षणमपि प्राप्नोति धैर्यं मनः ॥

राजगुह्ये श्रीकृष्णकृतगोरक्षनाथस्तोत्रे—

गकारो गुणसंयुक्तो रकारो रूपलक्षणः ।
क्षकारेणाक्षयं ब्रह्म श्रीगोरक्ष नमोऽस्तुते ॥
ब्रह्मणां च परं ब्रह्म रुद्रादीनां शिरोमणे ।
त्रैलोक्यं निर्मितं येन श्रीगोरक्ष नमोस्तु ते ॥
सर्वगुणो गुणाभावो निर्गुणश्च गुणस्थितः ।
साकारो वा निराकारः श्रीगोरक्ष नमोस्तु ते ॥
स्वः पूजयन्ति देवास्तं मर्त्यलोके च मानवाः ।
पाताले नागलोकाश्च श्रीगोरक्ष नमोस्तु ते ॥
एकाकी वर्त्तते नित्यं भवपाशविवर्जितः ।
परं ब्रह्माक्षयं ज्योतिः श्रीगोरक्ष नमोस्तु ते ॥
श्री गोरक्षस्येदं स्तोत्रं स्वयं कृष्णेन निर्मितम् ।
भक्तिभावविनिर्मुक्तो दासोऽहमिति भावयेत् ॥
आकाशं मन्दिरं यस्य नानारत्नोपशोभितम् ।
हस्तमध्ये स्थितं शम्भोरभयं वरदायकम् ॥
नमन्ति ब्रह्मा विष्णुश्च सुरा नृमुनयस्तथा ।
ज्ञानसाराखिलाः सिद्धाः श्रीगोरक्ष नमोस्तु ते ॥
श्री नाथं तु महात्मानं न जानाति स्वयं हरिः ।
किञ्चित्किञ्चिद्विजानाति महादेवनमस्कृतम् ॥

श्रीनाथश्चाक्षयो देवो देवानामप्यगोचरः ।
तत्पादौ चिन्तयेद्योगी अक्षयो योगनिश्चलः ॥

कल्पद्रुमतन्त्रे श्रीगोरक्षकवचे—

योगीश्वरं चादिकाथं सर्वव्याप्यं महेश्वरम् ॥

कल्पद्रुमतन्त्रे श्रीगोरक्षसहस्रनामस्तोत्रे

शुद्धस्फटिकसङ्काशं जटाजूटं त्रिलोचनम् ।
निरञ्जनं निराकारं निर्विकल्पं निरामयम् ॥
त्रिमूर्ति च त्रिलोकीशं विधिविष्णुमहेश्वरम् ।
विश्वरूपं सदाकारं गोरक्षं नाथदैवतम् ॥
विद्यापतिर्मन्त्रनाथो ध्याननाथो निरञ्जनः ।
नित्यनाथो भूतपतिर्नित्यानन्दो महीपतिः ॥
सर्वाराध्यः पूर्णनाथो द्युतिनाथो द्युतिप्रियः ।
सृष्टिनाथः स्थितिनाथो हारनाथो महागुरुः ॥
रमणो रामभद्रश्च रामनाथो जनार्दनः ।
घटस्थापनकार्य्याणि मुक्तिकार्य्यं विशेषतः ॥
विना गोरक्षमन्त्रेण न कर्तव्यं कदाचन ।
आगमोक्तानि कर्माणि वैदिकानि तथैव च ।
विना गोरक्षमन्त्रेण न सिध्यन्ति कदाचन[1] ॥

सारसङ्ग्रहे ब्रह्माण्डपुराणे ललितापुरवर्णने ललिताखण्डे—

तस्य चोत्तरकोणे तु वायुलोको महाद्युतिः ।
तत्र वायुशरीराश्च सदादानमहोदयाः ॥
सिद्धदिव्यर्षयश्चैव पवनाभ्यासिनोऽपरे ।
गोरक्षप्रमुखाश्चान्ये योगिनो योगतत्पराः ॥

द्वात्रिंशत्तमेऽध्याये—

नाथान्तरमितिप्रोक्तं हस्तविंशति चोन्नतम् ।
चतुर्नल्वप्रविस्तारं प्राग्वत्सोपानमण्डितम् ॥
तत्र नाथा महादेव्या योगशास्त्रप्रवर्तकाः ।
सर्वेषां मन्त्रगुरवः सर्वविद्या महातपाः ॥
चत्वारो योगनाथास्तु लोकानामिह गुप्तये ।
तुष्टाः कामेशदेवेन तेषां नामानि मे शृणु[2] ॥

---

१. साधयेत्तथा–प० सं० । २. मच्छृणु– पू० सं० ।

[1]मित्रीशोड्डीशषष्ठीशचर्य्याख्या कुम्भसम्भवाः ।
तैः सृष्टा बहवो लोका रक्षार्थं पादुकात्मकाः ॥
... ... ... दिव्यौघा तेषां नामानि मे शृणु ।
[2]मित्राद्या मानवौघाश्च सिद्धौघाः सुरतापसाः ॥
प्रायः[3] सालोक्यसारूप्यसायुज्यादिकसिद्धयः ।
महान्तो गुरवस्तांस्तु सेवन्ते[4] चतुरो गुरून् ॥
( उ० भा० उप० पा० ३७।३६-३९ )

स्कन्दपुराणे काशीखण्डे—

मम भक्तिं प्रकुर्वाणा ये विश्वेशं द्विषन्ति वै ।
विद्विषो मम ते ज्ञेयाः पिशाचपदगामिनः ॥
अध्यासतेऽन्धतामिस्रं मृतास्तेऽन्यत्र सन्ततम् ।
शिवनिन्दापरा ये च ये पाशुपतनिन्दकाः ॥
विद्विषो मम ते ज्ञेयाः पतन्तो नरकेऽशुचौ ।
अष्टाविंशतिकोटीषु नरकेषु क्रमेण हि ॥
कल्पं कल्पं वसेयुस्ते ये विश्वेश्वरनिन्दकाः ।
विश्वेशानुग्रहं प्राप्य मुनेऽहमपि मुक्तिदः ॥
मद्भक्तैस्तद्विशेषेण सेव्यो विश्वेश्वरोऽनिशम् ।
इयं बाराणसी ज्ञेया पशुपातरथस्थली[5] ॥

तन्त्रमहार्णवे—

रक्तनेत्रं हीनछाया रक्तं गात्रं तपस्विनः ।
मूर्तिः प्रसन्नवदना स्वल्पवाणी च कथ्यते ॥
चतुरशीतिसिद्धानां पूर्वादीनां दिशां न्यसेत् ।
एकविंशतिसङ्ख्याकं स्थानं नाम्नां च कथ्यते ॥
नवनाथा दिशो [6]ह्यष्टावेको मध्ये व्यवस्थितः ।
नवनाथस्थितिश्चैव सिद्ध्यागमेन कारयेत् ॥
गोरक्षनाथो वसेत्पूर्वं जगन्नाथवने स्थितः ।
क्रोशत्रये वसेन्नित्यमेको नाथः स उच्यते ॥
जालन्धरो वसेन्नित्यमुत्तरापथमाश्रितः ।
ज्वालामुखी पञ्चक्रोशवनमुत्तरमाश्रितः ॥

---

१. मित्री च शोदिशश्चैव चर्याख्यः कुम्भ०—पू० सं०
२. दिव्यविद्यामानवौघ—पू०सं० ।
३. प्राप्तः ।
४. संवेताश्—पू० सं० ।
५. पाशुपत°—पू० सं० ।
६. दिशाद्यष्टा°—पू० सं० ।

नागार्जुनो महानाथो ज्वालायेशानसंश्रितः(?)।
सप्तक्रोशे वने चैव तपस्यति महातपः॥
सहस्रार्जुनो दक्षिणे च गोदावरीवने स्थितः।
दशक्रोशप्रमाणेन तपस्यति महातपः॥
दत्तात्रेयो महानाथः पश्चिमायां वसेद्दिशि।
सरस्वतीपश्चिमे च नवक्रोशं समाश्रितः॥
देवदत्तो वसेन्नित्यमग्निकोणं समाश्रितः।
पञ्चक्रोशसमाने तु वायव्यां भरतो जड़ः॥
सप्तक्रोशप्रमाणेन आदिनाथो वसेद्भुवि।
कुरुक्षेत्रे मध्यदेशे क्रोशत्रयवने स्थितः॥
नैर्ऋते तु दिशां भागे मत्स्येन्द्रस्त्वेव[1] वारिधेः।
नाथस्थानानि वक्ष्यामि महागोप्यं न कथ्यते॥

षोडशनित्यातन्त्रे—

कादिसंज्ञा भवेद्रूपा सा शक्तिः सर्वसिद्धये।
तया त्रैभुवने तन्त्रं कल्पे कल्पे विजृम्भते॥
अवसाने तु कल्पानां सा तैः सार्द्धं व्रजेन्नमाम्।
नामपर्यायतोऽवाप्तं कालावाप्तमितिद्वयम्।
प्रसिद्धं बाह्यतो यच्च त्रीणि नामानि साधके॥
नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे।
विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह॥
नवाय नवरूपाय परमार्थैकरूपिणे।
सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते॥
स्वतन्त्राय दयाशक्तिविग्रहाय रसात्मने।
परतन्त्राय शक्तानां भव्याय भव्यरूपिणे॥

रुद्रयामले रससाधनप्रकरणे—

शिवरात्रिदिने प्राप्ते आरभ्यं कार्यसाधकैः।
चतुःषष्टिप्रमाणेन कोष्ठं कृत्वा तु भैरवम्॥
पार्श्वयोर्मूर्तिमालाञ्च मध्ये मूर्तिञ्च विन्यसेत्।
तस्याग्रे जुहुयात्पश्चाद्धेमसिद्धिः प्रजायते॥
रक्तोपवीतवासस्तु दद्याद्वै द्विजपुङ्गवम्।
कोष्ठसङ्ख्या तदर्द्धार्द्धयोगिनीर्यत्र पूजयेत्॥
शृङ्गीनादेन ते सर्वे मनसाह्लादकारिणा।

---

१. मत्स्येन्दरस्तु--पू० सं०।

रक्तो नस्वहकः[१] श्रेष्ठः स्कन्धाग्रे शृङ्गमाश्रितः ॥
मुखं कमलया युक्तं नेत्रे कमलभूषणम् ।
पृष्ठे च कमलाकारं हंसगत्या विराजितम् ॥
रक्तवासोत्तरीयेन वरमन्त्रं पुरो न्यसेत् ।
रक्तचन्दनसंघृष्टमपूपस्योपरि न्यसेत् ।
स्वादयेत्पञ्चदिवसं[२] पश्चात्पुण्ये समर्पयेत् ।
रसायनी महाविद्या सिद्धिर्भवति निश्चितम् ॥

तारासूक्तौ—

प्रणवो निर्गुणः प्रोक्तः सर्वाद्यो वेदगोचरः ।
वेदमाता तु गायत्री तदाद्यः प्रणवः स्मृतः ॥

कुलार्णवतन्त्रे द्वादशोल्लासे—

श्रीनाथचरणाम्भोजं यस्यां दिशि विराजते ।
तस्यै दिशे नमस्कुर्याद् भक्त्या प्रतिदिनं प्रिये ॥
न पादुकापरो मन्त्रो न देवः श्रीगुरोः परः ।
नास्ति शाक्तात्परो मार्गो[३] न पुण्यं कुलपूजनात् ॥ ( १२।११-१२ )

वायुपुराणे शिवस्तोत्रे—

[४]अप्रमेयाय गोप्त्रे च निर्गुणाय गुणाय च ।
वादप्रियाय सभ्याय मुद्रामणिधराय च ॥ वायु० २४।१४९ ।
देशकाल उपायेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥
श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥
इज्याचारदमा हिंसादानस्वाध्यायकर्म्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥
चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥

षटशाम्भवरहस्ये—

पृथ्वी कर्त्री महादेवी नाथाः शास्त्रस्य बन्धकाः ।
ब्रह्मतत्त्वविदित्याद्याः शरभाद्यास्तु रक्षकाः ॥

---

१. नम्वहकः—पू० सं० ।        २. सप्तदिवसं—पू० सं० ।
३. नहि शाक्तात्परा दीक्षा—मु० पा० ।
४. अप्रमेयाय दीप्ताय दीप्तये निर्गुणाय च ।
नमः प्रियाय वामाय मुद्रामणिधराय च ॥ —मु० पा० ।

नाथान्तो वा महेशानि[1] त्रितयं त्रितयं त्रिषु ।
ईशाख्यस्तु महेशानि केरलान्तर्गतो[2] भवेत् ॥

सूतसंहितायां यज्ञवैभवखण्डे द्वितीयेऽध्याये—

विष्ण्वादीनां तु देवानां ध्यानं चाधममिष्यते ।
अतो मोक्षार्थिभिः प्राज्ञैः शिव एकः शिवङ्करः ॥
ध्येयः सर्वं परित्यज्य शिवादन्यत्तु दैवतम् ।
अस्मिन्नर्थे श्रुतिः साध्वी समाप्ता वेदवित्तमाः ॥
अपक्वचित्तैर्मोक्षार्थं देवाविष्ण्वादयोऽपि च ।
ध्येयाः पक्वैः शिवो ध्येयः साक्षात्संसारमोचकः ॥
रुद्रं विश्वाधिकं विष्णुं ब्रह्माणं चान्यमेव च ।
समं चिन्तयतः साक्षात्संसारः[3] परिवर्त्तते ॥
महापापवतां पुंसां पूर्वजन्मसु सुव्रताः ।
विष्णुः सर्वाधिको भाति न साक्षात्परमेश्वरः[4] ॥
विष्णुः सर्वाधिको नान्य इति चिन्तयतां नृणाम् ।
नास्ति संसारविच्छित्तिः कल्पकोटिशतैरपि ॥
तेषां नैव च मोक्षाशा कल्पकोटिशतैरपि ।
ब्रह्मादिदेवतानां च विश्वाधिक्यं वदन्ति ये ।
अधोमुखोर्ध्वपादास्ते यास्यन्ति नरकार्णवम् ॥
( सू० सं० य० वै० खं० २।५३-६१ )

आदिनाथसंहितायाम्—

कौलिकान्कुलमार्गं च कुलद्रव्यं कुलाङ्गनाः ।
ये द्विषन्ति जुगुप्सन्ते ये निन्दन्ति हसन्ति ये ॥
येऽसूयन्ते च शङ्कन्ते मिथ्येति प्रवदन्ति ये ।
ते शाकिनीमुखे यान्ति सदारसुतबान्धवाः ॥
पिबन्ति शोणितं तस्य चामुण्डा मांसमुत्त्वचः ।
अस्थिनी चर्वयन्त्यस्य योगिनीभैरवीगणाः ॥

---

१. वामदेशानि–पू० सं० ।
२. केरलान्तरतो–प० सं० । ३. संसारे–मु० पा० ।
४. अतः परं "विष्णुः सर्वाधिको भाति नारकी स न संशयः । इति पू० सं० अधिकः पाठः ।

पद्मपुराणे सृष्टिखण्डे—

धारयित्वा तु रुद्राक्षं[1] म्रियते यः क्षितौ नरः।
स याति मत्पुरं[2] रम्यं सर्वदेवैः सुपूजितः॥ (६१।२०६)
शैवो वा वैष्णवश्चान्यो[3] गाणपत्योऽथ सौरकः॥ (६१।२१५)

पातालखण्डे—

अहं च ललितादेवी राधिका या च गीयते।
अहं च वासुदेवाख्यो नित्यं कामकलात्मकः॥
सत्यं योषित्स्वरूपोऽहं योषिच्चाहं सनातनी।
अहं च ललितादेवी पुंरूपा कृष्णविग्रहा॥ (७५।४४, ४६)

ब्रह्मवैवर्त्ते—

महाविष्णोरहंकारो बभूव सहसेति च।
सर्वं मल्लोमकूपेषु विश्वान्येवाहमीश्वरः॥
संहारभैरवो भूत्वा तं जग्राह स लीलया।
स्थिते मूर्द्धावशेषेण[4] प्रसादं च चकार सः॥
सर्वात्मानं ध्यायमानं स्तुतं भीतं कृपानिधिम्।
तच्छरीरं सुसम्पन्नं पुनरेव चकार सः॥

शिवपुराणे—

क्व च भेरी कलापश्च क्व च शृङ्गारवोऽशुभः।
क्व चानकमयः शब्दो गल्लनादः क्व चापि हि॥
(रुद्र सं०, पार्वती खण्ड अ० २७।२९-३०)

शक्तिसङ्गमतन्त्रेऽष्टमपटले—

कदाचिदाद्या ललिता पुंरूपा कृष्णविग्रहा।
लोकसम्मोहनार्थाय स्वरूपं बिभ्रती परा॥
कदाचिदाद्या श्रीकाली सैव तारास्ति पार्वति।
कदाचिदाद्या श्रीतारा पुंरूपा रामविग्रहा॥
रा शक्तिरिति विख्याता मशिवः परिकीर्तितः।
शिवशक्त्यात्मकं ब्रह्म रामरामेति गीयते॥
योगासनसमारूढं जटामण्डलमण्डितम्।
विभूतिभूषितं देवं त्रिनेत्रं चन्द्रशेखरम्॥
तेजःपुञ्जनिभां देवि सीतां तेजः स्वरूपिणीम्।
गौरीरूपां परां सीतां महासाम्राज्यनायिकाम्॥

---

१. खण्डितः पाठ—पू० सं०। २. यत्परं—पू० सं०।
३. भवेच्छाक्तो—मु० पा० ४. मूर्द्ध्ना विशेषेण—पू० सं०।

बृहदारण्ये—

द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्त्तं च, मर्त्यं चामृतं च, स्थितं च यत्सत्यं[1] च ॥ तदेतन्मूर्त्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत्यम्[2] ॥ तस्यैतस्य मूर्त्तस्य, एतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः ॥ अथामूर्त्तं वायुश्चान्तरिक्षञ्चैतदमृतमेतद्यदेतद्यम् ॥ तस्यैतस्यामूर्तस्य, एतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् मण्डले पुरुषस्तस्य ह्येष रस इत्यधिदैवतम् ।

अथाध्यात्मम्—इदमेव मूर्तं यदन्यत् प्राणाच्च यश्चायमन्तरात्मन्नाकाश एतन्मर्त्यमेतत्स्थि मेतत्सत् । तस्यैतस्य मूर्त्तस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥ अथामूर्त्तं प्राणश्च वायुश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतद्यम् । तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्यैष रसो योऽयं दक्षिणेक्षन् पुरुषोऽस्त्यह्येष रसः ॥ तस्य हैतस्य पुरुषस्य रूपं यथा महाराजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तं सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेद ॥ अथात आदेशो नेति नेति, नह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ।

(२,३।१-६ ई० अ० पृ० ८६)

पठित्वापि च न ज्ञातं ब्रह्म ते नाविका इव ।
नयन्ति पारं ये त्वन्यान् स्वयमर्वाचि संस्थिताः ॥
शक्त्या तु सृज्यते विश्वः शिवेन परिपाल्यते ।
कालेन संह्रियते च मुक्तिर्नाथेन दीयते ॥ इति ॥

ब्राह्मण्यप्राप्ते सति ब्रह्मतन्तुधारणमयुक्तम् । केचित्सूत्रधारकाः केवलं जात्यभिमानिनः पुरुषाः । अथ च काष्ठदण्डधारका आश्रमिणो दण्डिनस्तेषां खण्डनकरणे उपनिषत्सम्मतिमाह ब्रह्मोपनिषदि—

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥
सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेद् बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमभिधारयेत् ॥
सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् ।
तत्सूत्रं विदितं येन स विप्रो वेदपारगः ॥
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवान् ॥

---

१. 'यच्च सच्च त्यच्च'—मु० पा० । २. 'सत्'—मु० पा० ।

बहिः सूत्रं त्यजेद्विद्वान् योगमुत्तममास्थितः ।
ब्रह्मभावमिदं सूत्रं धारयेद्यः सचेतनः ॥

धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ।
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ॥

ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुत्तमम् ॥

अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ॥

कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।
तै संधार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥

शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ॥

इदं यज्ञोपवीतं तु परमं यत्परायणम् ।
विद्वान् यज्ञोपवीती स्यात्स यज्ञः स च सर्ववित् ॥ इति ॥

( ई० अ०, पृ० १५१ )

परमहंसोपनिषदि—

परमात्मात्मनोरेकत्वाज्ञानेन तयोर्भेद एक एव[१] विभग्नो या सा संध्या सर्वान् वा कामान्परित्यज्याद्वैते परमस्थितिः ।

ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते ।
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ॥
× × ×
स याति नरकान्घोरान्महारौरवमेव च ॥ इति ॥

( ई० अ० पृ० १५० )

शास्त्रोक्तविषयाभ्यासमजानन्तः केवलं शास्त्रपाठमात्रेणैवाभिमानिनस्तान्प्रति वाक्यमेतदित्याह—द्वादशवर्षो भूत्वा विद्याभ्यासमर्हति, ततश्च यावद्द्वादशवर्षं शब्द-बोधार्थं व्याकरणशास्त्रमध्येतव्यं ततश्च यावत् द्वादशवर्षमर्थबोधार्थं न्यायशास्त्र-मध्येतव्यं ततश्च यावत् द्वादशवर्षं वेदोऽध्येतव्यस्ततश्च षट्सु वर्षेषु वेदान्ताभ्यासः कर्तव्यः, एवं षट्सु वर्षेषु शास्त्रीयरीतिर्ज्ञातव्या । पुनरभ्यासश्च कर्तव्यः, एवमायुषोऽर्द्धं तु गतप्रायमेव । ततः पुनरिन्द्रियाणां शैथिल्येऽरिष्टे च सत्यभ्यासासक्तत्वं भवेत् । अतः प्रथमतः साक्षरतामात्रं पाण्डित्यमोपाद्य मनुष्यैर्योगाभ्यासः कर्तुमुचित इति ।

१. भेद एव–मु० पा० ।

ये त्वाचारबाहुल्यं दधतोऽपि वेश्या उपगम्य तत्सङ्गं कुर्वन्ति तान् प्रत्यस्माकमिदं कथनं बाह्यविषयिकामुज्ज्वलतां प्रदर्श्य मानसी मलिनता धार्यते । ततस्त्विदं श्रेयो यत् वेश्यासङ्गोऽपि न कर्तव्यो, [1]बह्वाचारस्यापि प्रयोजनं नास्ति गौणोऽयमित्याचारं ज्ञात्वा तस्य त्यागोऽपि न कार्यः, यथायोग्यत्वेन विवेकपूर्वकं सेवनं चास्यकर्तव्यमिति ।

भवेयं मनुष्यो यदैकस्तु राजा यदा जन्तुरेको भवेयं मृगेन्द्रः ।
यदा शास्त्रमेकं तदा योगमेव यदा देव एकस्तदा नाथ एव ॥

अस्मिन् मार्गे अद्वैतोपरिवर्त्ती नाथो देवता, प्राप्या निराकारज्योतिर्नाथो ध्येयः, साकारनाथ उपास्योऽथ च आदिगुरुः, साधनं योगः ।

अत्याश्रमी योगी गुरुः, मुमुक्षुः साधकः अवधूतगुरोर्मुख्यं चिह्नं नादो मुद्रा भस्मशैली ऊर्णायज्ञोपवीतमित्यादि । शक्तिर्जगत्कर्त्री । शिवः पालकः । कालः संहारकः । नाथो मुक्तिदायकः । प्रणवो वेदः । नादः सन्तानं । नव नाथाः । बिन्दुः सन्तानमीश्वरः । मनः शरीरं । जीवो अनुभवः । चत्वारो गुरवः—मत्स्येन्द्र ईश्वरश्चतुरङ्गी गोरक्ष इति स्वरूपाः । अपक्षवास्तविकपक्षमङ्गीकृत्येतरकल्पितपरपक्षपाखण्डखण्डनमित्यादिविषयः परमहंस इति परमहंसं वदन्ति । तत्किम्, उत्कृष्टहंसोऽस्ति यतो निकृष्टहंसत्वं तु परमात्मा । उत्कृष्टहंसत्वं तु परमहंसस्य कुत आगतं यदा ब्रह्मस्वरूपत्वं प्राप्तः । ब्रह्मस्वरूपत्वं च कुतः प्राप्तो यदि मायागुणरचितप्रारब्धकर्माणि मन्यते, एवं चायं तु निकृष्टहंस एव जीवोऽस्ति, ततश्चैतस्य हंसत्वं मरालत्वं कुतः किन्तु काकत्वमेव । यदि काकत्वं तर्ह्ययमेकाक्षो जातः । एकाक्षः को य एकेनैव चक्षुषा पश्यति । यद्ययं वर्णं तदा मायामेव मायादृशाऽपश्यत्[2] यदा चाश्रमी जातस्तदाद्वैतदृशैव पश्यन् वर्त्तते । इयमप्येकैव दृष्टिस्तया पश्यति । यतो महासिद्धैर्निश्चयः कृतोऽयं काकतुल्यो यदेवमेकाक्षः कर्त्तव्यः ।

सत्यं प्रपञ्चं कुर्वन्तो ब्रह्मणश्छादनं तथा ।
केचिद्रजोदृशः प्राप्ता विषयासक्तमानसाः ॥
मिथ्यामिथ्येति कुर्वन्तः केचिन्मायाविमोहिताः ।
लयं सर्वस्य कुर्वन्त आगता विश्वनाशकाः ॥
देदीप्यमानस्तत्त्वस्य कर्ता साक्षात्स्वयं शिवः ।
संरक्षन्तो विश्वमेव धीराः सिद्धमताश्रयाः ॥
तत्त्वं रक्षन्ति चाद्वैते द्वैते रक्षन्ति संसृतिम् ।
एकीभावे ततो भिन्नं द्वैताद्वैतविवर्जितम् ॥
मिथ्या वदन्ति यतयः सत्यं चापि विरागिणः ।
सिद्धानामेव सिद्धान्तः सत्यमिथ्याविवर्जितः ॥

---

१. बह्वाचार°—पू० सं० ।
२. पश्येत्—पू० सं० ।

म्रियते चत्कथं सत्यं वर्तते चेत्कथं वृथा ।
मृतिजीवनहीनं यत्कथं सत्यं कथं वृथा ॥
एककाले भवेत्सत्यमेककाले तथा वृथा ।
कालभेदाद् वृथा सत्यं नसत्यं न वृथा पृथक् ॥

मनोवागतीतो मनोवाङ्मयश्च नाथः १ । नाथः २ । शक्तिः ३ । कर्ता ४ । अकर्ता ५ । एतत्पञ्चकमिति, क्रमेणैतत्पञ्चकं स्तौति—

अवाच्यमुच्येत कथं पदं तदचिन्त्यमप्यस्ति कथं विचन्तयेत् ।
अतो यदस्त्येव तदस्ति तस्मै नमोऽस्तु कस्मै वत नाथतेजसे ॥
अकर्तृतत्कर्तृ च तत्परं पदं वदन्ति योगामृततृप्तचेतसः ।
अकर्तृता कर्तृतया निरूप्यते न वास्तवी वस्तुनि तद्द्वयी कुतः ॥
अवाच्यरूपा सदसद्विलक्षणा विचक्षणा सा कृतलक्षणापि सा ।
नमामि तां शक्तिमकर्तृतामयीं स्वतः करोत्येव च कर्तृतामयीम् ॥
निजेच्छया काण्डसमुद्भवाप्यया ऽमानयानु दर्शितकर्तृतं शिवम् ।
नमाम्यभित्तावपि चित्रितं जगद्विचित्रमेतत्त्वनपेक्ष चेतरम् ॥
ममेदमस्याहमहं मदक्रियः[1] सदैव कर्त्तेत्यभिसंधिपूरितम् ।
करोत्यकर्त्तारमुदारलीलया य उच्यते नाथ इति श्रियेऽस्तु नः ॥
प्रसङ्गजं कर्त्तृपदं विहाय यः फणीव निर्मोकमना पदास्थितम् ।
नमाम्यकर्त्तारमकर्तृतामयं यदस्तिसोऽस्मीत्यगुणः स्वयं स्थितः ॥

यस्य साक्षादनुभवः शास्त्रज्ञानेन तस्य किम् ।
चेष्टा स्वभावजा स्त्रीणां कविभिर्वर्ण्यते श्रमैः ॥
जातमात्रं पिबेद्वत्सो बालको वाप्यपाठितः ।
यथा मातुःस्तनं पक्षी न तथा पाठितोऽपि सन् ॥
पिबन्तोऽप्यमृतं नित्यममरा नामरा इह ।
सिद्धावधूता अमरा गृह्णन्तो विषया विषम् ॥
ज्ञानेन छिद्यमानं तु कर्माङ्कुरमुपाददे ।
तदेव योगच्छिन्नं तु यान्ति निर्मूलतां द्रुतम् ॥
संचितं क्रियमाणञ्च कर्म नश्यति तन्मते ।
प्रारब्धं न पुनस्तत्र प्रमाणं श्रुतिरुच्यते ॥
भूतकालोद्भवं कर्म भाट्टाः[2] सत्यं कुर्वते ।
कालत्रितयजं कर्म त्यजत्यत्याश्रमी द्रुतम् ॥
पत्रं पुष्पं फलं शाखा छिद्यतेऽपि पुनः पुनः ।
न यावच्छिद्यते मूलं तावद्वृक्षः प्ररोहति ॥

---

१. महाक्रियः—पा० । २. भट्टाः—पू० सं० ।

पुनः पुनर्भृतो वारा सूक्ष्मछिद्रेण संयुतः।
कलशो रिक्ततां याति विफलः श्रम एव सः ॥
यान्तु गङ्गां गयां यान्तु नमन्त्वश्ममयान् सुरान्।
कायालये विभात्येको जगदात्मा स विस्मृतः ॥

संन्यासिनो विजानन्तु कथयन्तु च पण्डिताः।
अवधूताः क्रियासिद्धास्तत्त्वरूपा निरञ्जनाः ॥
योगदेहं सृजत्येतं कालभीत्या त्ववत्ययम्।
हन्ति वैषयिकं देहं तन्नाथः को हरीश्वरः ॥

सृजत्यब्जो हरिः पाति हरः संहरते जगत्।
तेभ्योऽन्यो मुक्तिदस्तत्र संकेतः सिद्धयोगिनाम् ॥
चतुर्भिः पथिभिर्यान्ति चत्वारो ज्योतिरालये।
योगिनो वैदिका लोकास्तान्त्रिका व्यवहारिणः॥

योगिनो योगयज्ञेन केवलं ज्योतिरुत्तमम्।
इष्ट्वा यानीष्टमार्गेण द्रुतं तत्खेचरा इव ॥
स्ववर्णाश्रमधर्मेण वैदिका समुपास्य तत्।
निवृत्तिपरमा यान्ति तद्भूमाविव मानुषाः ॥

तान्त्रिकाः शुद्धविपणिं विषयान्परिहाय तत्।
दुर्गमेन पथा यान्ति जरा इव जने जनाः ॥
संसारिणस्तु संसारप्रलये प्राप्नुवन्ति तत्।
कृतयात्रमिवाधीशं सर्वे लोका निरर्गलाः ॥

न कुर्याद् बुद्धिमान् प्रीतिं वृथा वस्तुनि फल्गुनि।
मृगतृष्णामयं मायाजालं किं मन्यते यतः ॥
मोक्षशास्त्रकृतो नैव दृष्टा मुनिजना नृपाः।
नीतिशास्त्रकृतः कान्ताः शृङ्गारग्रन्थकारिकाः ॥
मूले मोक्षस्यावधूतो नीतिमूलं नराधिपः।
कान्ता शृङ्गारमूलं यद्वाचारम्भणमस्ति नः ॥

एवं ते त्रयोऽपि क्रियायामेव प्रसन्ना क्रियायुक्तेति कथनेनापि प्रसन्नाः, परन्तु न तु क्रियारहितकथनेत प्रसन्नास्त्रयेण त्रयोऽपि पुरुषाः स्वसङ्गवर्ज्जितास्त· द्यथा अवधूत इति, विनानुभवेन शास्त्रारम्भकाः पुरुषा इति, राजनीतिकर्तव्यताहीना भृत्या इति, स्त्रीजन इति, पुरुषार्थहीनाः पुरुषा इति, तान्स्त्रींस्त्रयो हसन्ति, कथं एकेन केनापि पुरुषेण मन्दकामेन कस्यापि वैद्यस्य गृहे गत्वा तं प्रति स्वचेष्टोक्ता, तदा वैद्येनोक्तं यत्नं करिष्यामि इति। तस्य वैद्यस्य वधूः पार्श्ववर्तिनी सहासा जाता तस्या

अभिप्रायोऽयम्–अयं मम भर्त्ता वैद्यः स्वयमपि नपुंसकोऽन्यस्य कामोदययत्नं कथं करिष्यतीति, स्वयमसमर्थोऽन्यसामर्थ्योपायं करिष्यतीति प्रतारणमात्रमिति।

ब्रह्माभूतो मुनिर्व्यासो मिथ्यामायोपदेशतः ॥
कृतानेकपुराणोऽभूत्तस्यै माये नमोस्तु ते ॥
वशिष्ठादिमुनिव्रातस्त्यागस्यैवोपदेशकृत् ॥
स्वयमङ्गीकृतस्त्रीकस्तस्मै भोगाय ते नमः ॥
दासाः प्रेमातुरा भक्तिं पुरुषार्थं वदन्त्यहो ॥
सशरीरे गते चित्ते भक्तिः प्रेम्णा समं गताः ॥
योगः स्मार्तो वैष्णवश्च धर्मा भूपास्त्रयस्त्विमे ॥
कर्मारिभ्यस्त्रिधाऽवन्ति स्वात्मदेशं त सुस्थितम् ॥
वैष्णवो नृपतिर्धर्मः सत्यं प्रारब्धमात्मगम् ॥
कर्मद्विषः समाश्रित्य पाति स्वं देशमात्मना ॥
स्मार्त्तस्तु नृपतिर्धर्मः सत्यं प्रारब्धमात्मगम् ॥
कर्मारिभ्यो बलिं दत्त्वा पाति स्वं देशमात्मना ॥
योगधर्मो नृपः सर्वान् जित्वा कर्मद्विषो[1] बली ॥
मनश्च किंकरं कृत्वा पाति स्वं देशमात्मना ॥

एतद्ग्रन्थे बहुशास्त्राणां प्रामाण्यं दीयते तत्तु अस्मदीयार्थं वा एतन्मार्गस्य शिष्याणां श्रद्धार्थं दीयत इति नास्ति। अस्मिन्नर्थे तु योगशास्त्रस्यैव प्रामाण्यमेतच्छास्त्रज्ञानेन पूर्णम्, परन्तु वादिनां हिताय भो अन्यग्रन्थान्तरेऽपि भवदीय नानामतान्तरेऽपि चायमेव मार्गः श्रेष्ठः सर्वस्य लक्ष्योऽवधूत एवेति हेतुर्न तु सिद्धान्तार्थः। अस्माकं त्वन्यप्रमाण उपेक्षेति ज्ञेयम्।

अवधूतशिष्यं विनेतरसंप्रदायकशिष्या मुग्धा वर्त्तन्ते। अवधूतसंप्रदायस्येयं रीतिः—षट्त्रिंशल्लक्षणसंपन्नो गुरुर्द्वात्रिंशल्लक्षणसंपन्नः शिष्यस्ततश्चतुर्लक्षणन्यूनः। गुरुशिष्यलक्षणं च अधिकतत्त्वो गुरुर्न्यूनतत्त्वः शिष्यः। एतादृङ्न्यूनत्वं तु योग्यं न तु मूर्खशिष्योऽधिकलक्षणहीनो मोक्षभाग्भवेत्। पुराणे शौचक्रियादिकरणपर्यन्तक्रिया उपदिशतीति तन्महासिद्धा हसन्ति। अहो बुद्धिमन्तः शिष्यास्तान् गुरून् एतादृक्क्रिया अपि कथयन्ति। शिष्यस्य बुद्धेः परावधिरिति। एतादृशशिष्यकरणे गुरूणां दोषः प्रवर्त्तते। अत एव महासिद्धा बहून् दीक्षितान्न कुर्वन्ति। कथं? बहवो विवेकिनो न भवन्ति। यतः स्त्रियां भ्रष्टायां पत्युर्लज्जा, तथा शिष्ये भ्रष्टे गुरूणां लज्जा निन्दा पातकं च प्रवर्तते। अत एव बहुदीक्षिता आचार्या गुरव-

१. धर्मद्विषो–पू० सं०।

स्त्याज्याः, महासिद्ध एव गुरुः कर्त्तव्यः, महासिद्धैरपि चतुर्लक्षणं न्यूनः शिष्यः कर्तव्यो बहवश्च शिष्या वर्जनीयाः, इति सिद्धान्तः।

अथ पुरुषस्य द्वात्रिंशल्लक्षणानि लिख्यन्ते–प्रथमतो ज्ञानपरीक्षा—निरालम्बः १, निर्भ्रमः २, निवासी ३, निःशब्दः ४। विवेकपरीक्षा–निर्मोहः ५, निर्बन्धः ६, निःशङ्कः ७, निर्विषः ८। विचारपरीक्षा—सर्वांगी ९, सावधानः १०, सन् ११, सारग्राही १२। निरालम्बपरीक्षा–निः प्रपञ्चः १३, निस्तरङ्गः १४, निर्द्वन्द्वः १५, निर्लेपः १६। संतोषपरीक्षा-अयाचकः १७, अवाञ्छकः १८, अमानः १९, अस्थिरः २०। शीलपरीक्षा–शुचिः २१, संयमी २२, शान्तः २३, श्रोता २४। सहजपरीक्षा–सुहृत् २५, शीतलः २६, सुखदः २७, स्वभावः २८। अष्टमे शून्यपरीक्षा–लयः २९, लक्ष्यं ३०, ध्यानं ३१, समाधिः ३२। इति द्वात्रिंशल्लक्षणानि पुरुषस्य[१] समाप्तानि। [२][ पुनरपि पुरुषस्य चत्वारि लक्षणान्येतानि, किमपि वस्तु नास्तीत्यनवरतबोधः ३३, एतानि लक्षणानि तदितराण्यलक्षणानि तेषामुभयेषामेकीकरणं ३४, एतद्द्वयोरैक्यं यत्तत्तत्त्वमिति ३५, अतः परमप्यस्तीत्यनुभवः ३६ ]।

अद्वैतोपरिवर्तिनाथ उदितो यत्र ध्वनिः सन्ततो
नाथो बिन्दुरुतापि शक्तिरुदिता सा चार्द्धमायात्मिका।
ऊरुद्रो हरिरो विधिर्मिति स मे ध्येयोऽस्तु नित्यं महा-
नोंकारोखिलशब्दबीजमबुधैरज्ञातरूपो मुदे॥

अयमोंकारो महासिद्धानां ध्येयस्तस्य स्वरूपम्—उकारोऽत्र रुद्रस्वरूपमर्द्धमात्रा शक्तिस्वरूपं बिन्दुर्नाथस्वरूपमर्द्धमात्राया जातोऽकारो विष्णुस्वरूपं बिन्दोर्जातो मकारो ब्रह्मस्वरूपं ध्वनिर्निराकारनाथस्वरूपं व्यापकं ध्वनिर्वर्णश्चोभयमपि मिलितं पूर्णं यद्द्वैताद्वैतविलक्षणं साकारनिराकारातीतमद्वैतोपरिवर्त्ति महानाथस्वरूपमिति। किंचात्रौंकारे उकारबिन्द्वर्द्धमात्रयोर्योगादेव। बिन्दुयोगान्मकारोऽर्द्धमात्रायोगादकार इति। तथा चौंकारे नाथशिवशक्तिरूपप्राबल्यं विष्णुब्रह्मस्वरूपयोरप्राबल्यमत एवात्रैतद्देवतात्रयध्यानं महासिद्धैर्मुख्यत्वेन क्रियते, पुनर्ध्वनिर्निराकारनाथरूपं ध्वनिवर्णश्चोभयात्मकः पूर्णनाथस्तु सांप्रतमस्ति तथास्त्येवेति ब्रह्मविष्णुध्यानतो नाथशिवशक्तीनां ध्यानमुत्तममुक्तं, तत्रापि नाथध्यानं बलिष्ठम्। उकारो यद्योंकारः स्यात्तदा मात्राशक्त्येव। उकारोपि यद्योंकारःस्यात्तर्हि बिन्दुशक्त्येव, बिन्दुश्च यद्यपि वर्णस्तथापि तत्र स्वरस्याधिक्यम्, स्वरश्च वर्णापेक्षया बलवानेव। कथं? तत्र ध्वनिभागस्याधिक्यात्, ध्वनिश्च नाथरूपमेवातो नाथध्यानं बलिष्ठमित्युक्तम्। तदुक्तं योगशास्त्रे—

---

१. शिष्यस्येत्यर्थः।
२. [ ] अयमंशो नास्ति पूर्व संस्करणे।
३. गुरोरित्यर्थः।

ब्रह्मग्रन्थिं ततो भित्त्वा विष्णुग्रन्थिं भिनत्त्यसौ ।
विष्णुग्रन्थिं ततो भित्त्वा रुद्रग्रन्थिं भिनत्त्यसौ ॥
रुद्रग्रन्थिं ततो भित्त्वा छित्त्वा मोहमयीं लताम् ।
उद्‌घाटयत्ययं वायुं ब्रह्मद्वारं सुगोपितम् ॥ इति ।

योगसम्प्रदायं विना सर्वमते विपरीता वार्ता वर्त्तते । कथं ? नाथांशो नादो नादांशः प्राणः शक्त्यंशो विन्दुर्बिन्दोरंशः शरीरम् । एवं च योगसंप्रदाये शिष्योधिको यो नादाज्जायते[1], अन्यमते पुत्रोऽधिकः कथ्यते स चाधिकः कथं भवेत् । कथं वपुर्बिन्दुतो जातं, पुनः पुनर्नादांशः प्राण उक्तो बिन्द्वंशः शरीरमुक्तम् । तत्रापि प्राणाच्छरीरमुत्तिष्ठति शरीरस्याधारः प्राणो भवति । तथा च नादस्यात्मजः शिष्य एवाधिक इति ।

अन्यच्च कथ्यते—

जनिता चोपनेता च यस्तु विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥
राजपत्नी गुरोःपत्नी मित्रपत्नी तथैव च ।
पत्नीमाता स्वमाता च पञ्चैते मातरः स्मृताः ॥

इत्येतत्कथने प्राधान्यं पित्रोरेवायाति तत्समीचीनं न भवति । इयं तु रीतिः सांसारिकी न तु पारमार्थिकी वार्त्ता । अतः कारणाद् गुरुरेव मुख्यो नादात्मजः शिष्य एव मुख्य इति सिद्धान्तः । किं च धर्मोऽर्थः कामो मोक्ष इति, ब्रह्मचर्यं गार्हस्थ्यं वानप्रस्थं संन्यास इति, शृङ्गारो हास्यं करुणा रौद्रो वीरो वीभत्सो-भयानकोऽद्भुतं शान्त इति, पृथ्वी-आपस्तेजोवायुराकाश इति, ब्रह्माविष्णुरुद्रादिश्च । एतत्प्रक्रियायामनुक्रमो नास्ति किंतु व्यतिक्रमो वर्त्तते । कित्वनुक्रमस्त्वेवंरीत्या—मोक्षो धर्मोऽर्थः कामः, संन्यासो ब्रह्मचर्यं वानप्रस्थं गार्हस्थ्यम्, शान्तकरुणाद्‌भुतं वीरो रौद्रो हास्यं भयानको वीभत्सः शृङ्गारः, आकाशो वायुस्तेजो जलं पृथ्वीति । कथं ? आकाशाज्जायते वायुर्वायोस्तेजस्तेजसो जलं जलात् पृथ्वी । पुनः शिवाद्भैरवो, भैरवाच्छ्रीकण्ठः, श्रीकण्ठात् सदाशिवः, सदाशिवादीश्वर ईश्वराद्रुद्रो रुद्राद्विष्णुर्विष्णोर्ब्रह्मा इतीयं योगसंप्रदायरीतिः सैव तान्त्रिकी । परंतु शिवभैरवश्रीकण्ठेति देवत्रयक्रमः सूत्रे न गृहीतः । पञ्चैव देवताः सदाशिवादयो गृहीतास्तत्रापि पौराणिके वैदिके देवतात्रयमेव गृहीतम्, तत्कथ्यते—ब्रह्मा विष्णू रुद्र इति पुराणप्रक्रिया । ब्रह्मा विष्णू रुद्र ईश्वरः सदाशिव एषा तान्त्रिकी प्रक्रिया । अवधूतैः कथ्यते—एषा प्रक्रिया कुत आगता ? सर्वा योगादेवागता । यतः सर्वस्य कारणं योग एव प्रवर्त्तते । यतोऽवधूताद्भिक्षुको जातो, भिक्षुकाद् ब्रह्मचारी, ब्रह्मचारिणो गृहस्थो

---

१. नादांशो ज्ञायते—पू० सं० ।

जातः। कथं ? एकैकगुणलक्षणहीनो ह्रासक्रमेण संभूतं सन्तानमेवेति मन्यते[१]। प्रथमतो गौणमुख्यप्रक्रिया कथिता। तत्र काचिदुत्पत्तिक्रमतो मुख्या गौणी वा ज्ञेया, काचिच्च फलवृक्षरीत्या मुख्या गौणी वेति ज्ञेयम्।

एकदा श्रीमहासिद्धविचारनाथेन भर्तृहरिनृपेण व्याकरणशास्त्रोपरि लक्षसंख्याकाः कारिकाः कृताः। नागेशेन ताः श्रुताः, तदा प्रसन्नो भूत्वा ब्रह्माण्डे विहरन् समागतो यस्तत्र स्थितो महावधूत आगत्य चादेशादि[२]व्यवहारकरणानन्तरं तेनोक्तम्—हे स्वामिन्नहं तुष्टोऽस्मि यतः कांचिद्याचनां कुरु, तदा महासिद्धेनोक्तं तव मिलने सुखं जातमन्यत्तु नास्त्यपेक्ष्यं कृतकृत्य एवास्मि, पुनः पुनस्तेन शेषेणोक्तं याचनीयमेवेति। तदा भर्तृहरिणोक्तं किं याचे यदैश्वर्यच्छा भवेत्तत् महाराज्यं त्यक्त्वावधूतो जातः। पुनर्मोक्षस्य यदि वाञ्छा भवेत्, सा तु अवधूतभावे सिद्ध्यत्येव संशयो नास्तीति। तदा शेषोऽसन्तुष्टो भूत्वा ममापमानः कृतो यतः शापं दद्मि, भवदीयकारिकाः प्रसिद्धा न भविष्यन्तीति। तदावधूतेनाप्युक्तं त्वदीयकृतव्याकरणशास्त्रं कलौ वृत्त्यर्थं भविष्यति पुनर्यत्र कुत्रापि स्थले ससंशयं भविष्यति तदा ममकारिकां विना निर्णयो न भविष्यतीति। एवं परस्परं शापो जातस्तेनाधुनिकसमये व्याकरणादिसाधनशास्त्रं परमार्थे न्यूनं भवति चातुर्यादि प्रकारं प्रायशो भवतीति।

आचार आचार इति वदन्ति। य आचारोऽत्याचारः सन् कथं निर्वहति ? भोजने यद्भुतं तत् चर्मपात्रेणैवायाति, गमने यत्पादत्राणं तदपि चर्मजमेव स्पृश्यते, शयने स्त्रीसंगो भवति तस्य कथैव का। प्रातःकाले यद्यपि शुद्ध्यर्थं स्नानं क्रियते तथापि चतुर्षु प्रहरेषु करादिकस्य मुखादिस्पर्शनं स्वभावत एव सर्वदा जायते। किं च सूर्यादिग्रहणे मृत्तिकापात्राणि जलं चाशुचित्वेन त्यज्यते न तु धान्यघृतादिकं वस्तु। तदा एवं ज्ञायते जलाशये जलं बहु लभ्यते कुलालानां गृहेषु मृत्पात्राणि चाल्पव्ययेन लभ्यन्ते, तेन तदशुचित्वं कथं न क्रियते। घृतधान्यादिनिवारणे तु बहुद्रव्यव्ययो भवेदित्याद्यनेकप्रकारकं किं किं लिख्यते। तस्मादाचारवस्तु कल्पितमेव तद् बुद्धिमन्तो जना न किंचिदपि वस्तु जानन्ति। विचार एव मुख्य इति सिद्धान्तः। तत्र चैवं न ज्ञेयमत्र सिद्धान्त आचारो नास्तीति। कथं ? आचारोऽस्माकं मते वर्त्तते, स च विचारपूर्वक इति। अन्य आचारं कुर्वन्ति तादृशस्तु क्रियत एव। नास्ति, यथायोग्यास्तु क्रियते च स चापि गौणं मत्वा क्रियते मुख्यास्तु तत्त्वविचार इति कृत्वायमपि व्यवहारः सर्वथा त्याज्यो नास्तीति।

आचारविधिः—

प्रातरुत्थाय गुरुस्मरणं कृत्वा अकालं स्मृत्वा शौचादिक्रियां दन्तधावनं स्नानं च कृत्वा नाथालये गत्वा पूजा कर्त्तव्या, पूजानन्तरं भोजनं कर्तव्यं, सायंकाले च

---

१. मन्ये—पू० सं०। २. च देशादि–पू० सं०।

